# दशमोऽध्यायः

एकविंश खण्ड

अथापर ॥ (३०३)

पुरुषस्य षोडशीभिर्विंऽशशतऽ[1] सारत्निप्रादेश सप्तविध सपद्यते ॥ (३०४)

तासा पञ्चषोडशीरपोद्धृत्य शेषा परिमण्डल करोति ॥ (३०५)

तदुत्तरेण द्रोणचिता व्याख्यातम् ॥ (३०६)

अथ ता पञ्चषोडश्यस्ताभिरवान्तरदिक्षु पादानुन्नयेत् ॥ (३०७)

शिर[2] पुरस्तात् ॥ (३०८)

तासा परिकथए व्याख्यातम् ॥ (३०९)

प्रधीनाऽ सप्तधा विभाग । प्रधिमध्यमा[3] प्रक्रमव्यासा भवन्ति ॥ (३१०)

यदतिरिक्तऽसपद्यते तच्चतुरस्राणामध्यर्धाभिर्योजयेत ॥ (३११)

अपरस्मिन्प्रस्तारे ॥ (३१२)

पादानाऽशिरोवद्विभाग ।शिरस पादवत् ॥ (३१३)

व्यत्यास चिनुयाद्यावत प्रस्ताराऽश्चिकीर्षेत् ॥ (३१४)

कूर्मस्यान्ते तनुपुरीषमुपदध्यात् ॥ (३१५)

मध्ये बहुलम् ॥ (३१६)

एतदेव[4] द्रोणे विपरीतम् ॥ (३१७)

अथ हैक एकविधप्रभृतीन्प्रउगादीन्ब्रुवते ॥ (३१८)

समचतुरस्रानेक आचार्या ॥ (३१९)

तस्य करण्या द्वादशैनष्टका कारयेत् । तासामर्ध्या पादाश्च ॥ (३२०)

अथाश्वमधिकस्याग्ने पुरुषाभ्यासो नारत्निप्रादेशानाम् ॥ (३२१)

---

1 °विंशशत BU, विंशतशत M

2 Thus in copies of A, before शिर Thibaut reads पञ्चम्याऽ, but the locat cannot be correct and पञ्चम्या would be superfluous

3 Thus in copies of A, प्रधिमध्या Thibaut, but cp XXX 18 411 2

4 नव only in U, and in one of Thibaut's MSS

प्राकृतो[1] वा त्रिगुणः ॥ (३२२)
त्रिस्तावोऽग्निर्भवतीत्येकविँशोऽग्निर्भवतीत्युभय ब्राह्मणमुभयं ब्राह्मणम्[2] ॥ (३२३)

इति दशमोऽध्यायः

॥इति बौधायन-शुल्बसूत्रं समाप्तम्॥

1. Thus HU. प्रकृतो B, ता M.
2. See XXVI. 10.2.5.4. where, however, only the first Brāhmaṇa is found.

# BAUDHĀYANA-ŚULBASŪTRAM

## बौधायन-शुल्वसूत्रम्

(द्वारकानाथयज्वरचितशुल्बदीपिकाख्यव्याख्यासहितम्)

*with*

Sanskrit Commentary by Dvārkānātha Yajvan

*and*

English Translation and Notes by Prof G Thibaut

## FOREWORD

We are reproducing here in the following pages the Text of the *Baudhāyana Śulba Sūtras* and the Sanskrit Commentary, entitled *Śūlba-dīpikā*, by Dvārakānātha Yajvan, along with the English translation and critical notes of Prof. G. Thibaut as appeared in *the Pandit*, (a monthly Journal of the Benares College) 1875 to 1877, as detailed below :

*Vol. IX and X—Old Series*

| Date of issue | Page No. | Adhyāya and Sūtras |
|---|---|---|
| May 1, 1875 | 292—298 | I. 1—40 |
| June 1, 1875 | 17— 22 | I. 50—67 |
| July 1, 1875 | 44— 50 | I. 68—113 |
| August 2, 1875 | 72— 74 | II. 1—20 |
| November 1, 1875 | 136—146 | II. 21—69 |
| December, 1, 1875 | 166—170 | II. 70—III. 22 |
| January 1, 1876 | 186—194 | III. 23—III 86 |
| February 1, 1876 | 209—219 | III. 87—III. 135 |
| *Vol. I. New Series* | | |
| October 2, 1876 | 316—322 | III. 136—152 |
| February 1, 1877 | 557—578 | III. 153—214 |
| March 1, 1877 | 626—642 | III. 215—259 |
| April 2, 1877 | 692—706 | III. 260—306 |
| May 1, 1877 | 761—770 | III. 307—323 |

For the Śulbasūtra and the *Śulbadīpika*, Prof. Thibaut used four MSS. (i) one belonging to the Library of the Benares College, containing the text only (M) and three containing the text and the commentary by Dvarākānātha Yajvan, one belonging to the Library of the India Office, London (A), another belonging to the Library of the Government College, Benares (B), the third in private hands at Benares (C).

In the first *Paṭala*, extracts are occasionally given from the *Śulba-mīmāṅsā*, a commentary on Baudhāyana's *Śulbasūtra*, and from the commentaries of Kapardisvāmin and Karavinda-Svāmin on the Śulbasūtra of Āpastamba These extracts have been taken from manuscripts belonging to the collection made by Mr. Burnell, which formed at the time of Thibaut a part of the Library of the India Office ; they were transcribed from the Grantha-character into Devanāgarī. The translation of the Sūtras is partly paraphrastic, as is required for clearness' sake It follows in most cases the explanation of the commentary , There are, however, a number of passages, for the right understanding of which, the guidance of the commentator could not be accepted , in the more important cases this has been explicitly mentioned.

The following *Śloka* would be of interest :

बौधायनीशुल्बस्य प्रव्याख्या प्रेक्ष्य यज्वना ।
टीका भट्टात्मजेनेय क्रियते शुल्बदीपिका ॥

—Satya Prakash

# प्रथमोऽध्याय:

अथेमेऽग्निचया: ॥ (१)

In the following we shall treat of the different manners of building agni (1)

अथ गृह्यानन्तरम् । अग्निचय[1] ग्रहणं वेद्या अप्युपलक्षणार्थम् ।

तेषां भूमे परिमाणविहारान्व्याख्यास्याम ॥ (२)

We shall explain how to measure out the circuit of the area required for them (*agni*, *Vedi*, etc) (2)

परिमाणविशेषान्विहारान् । विहरण नाम चतुरस्रादिरूपेण भूमे करणम् ।

अथाङ्गुलप्रमाणम् ॥ (३)

The following is the measure of an *angula* (3)

सर्वप्रमाणशेषत्वादङ्गुलप्रमाणमुच्यत इति शेष. ।

चतुर्दशाणव ॥ (४)

Fourteen grains of the *anu*-plant (*panicum miliaceum*) (4)

अणुर्धान्यविशेष: । परस्परसंश्लिष्टाश्चतुर्दशाणवो यावत्प्रमाण तावदङ्गुलप्रमाणमित्यर्थ. ।

चतुस्त्रिंशत्तिला: पृथुसंश्लिष्टा इत्यपरम् ॥ (५)

Or according to another opinion thirty-four sesame grains put together with their broad sides (5)

कोशसस्थानवत् पृथुप्रदेशेन संश्लिष्टाश्चतु[2]स्त्रिंशत्तिला: । अङ्गुलप्रमाणमित्यपर मतम् ।

---

1 C ० चयन ० ।

2 A, स्थानवत् स्थापिता. पृथुप्रदेशेन संश्लिष्य चतु० ।

दशाङ्गुलं क्षुद्रपदम् ॥ (६)

The small *pada* has ten *aṅgulas.* (6)
द्वादश प्रत्यञ्चि क्षुद्रपदानीत्येवमादिषु दशाङ्गुलं क्षुद्रपदं विद्यात् ।

द्वादश प्रादेशः ॥ (७)

The *prādeśa* has twelve *aṅgulas.* (7)
तदवस्तात्प्रादेशेन वर्धयेदित्येवमादिषु द्वादशाङ्गुलः प्रादेश इति विद्यात् ।

पृथोत्तरयुगे त्रयोदशिके ॥ (८)

The two measures called *pṛtha* and *uttarayuga* contain thirteen *aṅgulas.* (8)
पृथमात्राद्वेदी असंभिन्ने भवत उत्तरयुगे नौत्तरनाभिरित्यादिषु त्रयोदशाङ्गुलप्रमाणे पृथोत्तरयुगे विद्यात् ।

पदं पंचदश ॥ (९)

The *pada* contains fifteen aṅgulas. (9)
त्रिशत्पदानीत्यादिषु पञ्चदशाङ्गुलप्रमाणं पद विद्यात् ।
क्षुद्रपदादीनां पदान्तानां क्रमविध्युपादानात्परस्परसंबन्धः ।

अष्टाशीतिशतमीषा ॥ (१०)

The *Iṣa* contains eighty-eight *aṅgulas.* (10)
रथसंमितेत्येकेषामित्यादिषु ईषाप्रमाणमष्टाशीतिशताङ्गुलं प्रमाणं विद्यात् ।

चतुः शतमक्षः ॥ (११)

The *akṣa*, one hundred and four. (11)
तत्रैव रथाक्षान्तराला यूपावटा भवन्तीत्येवमादिषु चतुरधिकशताङ्गुलमक्षप्रमाणं विद्यात् ।

षडशीतिर्युगम् ॥ (१२)

The *Yuga* eighty-six. (12)
तत्रैव षडधिकाशीतिप्रमाणं युगं विद्यात् । ईषादीनां रथावयवापेक्षया संगतिः ।

द्वात्रिंशज्जानुः ॥ (१३)

The *jānu* thirty-two. (13)
ऊर्ध्वप्रमाणाभ्यासं जानोः पञ्चमस्येत्यादिषु द्वात्रिंशदङ्गुलप्रमाणं जानोः प्रमाणं भवति ।

षट्त्रिंशच्छम्याबाहू ॥ (१४)

The two measures *Śamyā* and *bāhu* contain thirty-six *aṅgulas* each. (14)

शम्यामात्री चतुस्रक्तिर्भवति तस्माद्बाहुमात्राः खायन्त इत्यादिषु षट्त्रिंशदङ्गुलप्रमाणे शम्याबाहू विद्यात् ।

द्विपदः प्रक्रमः ॥ (१५)

The *prakrama* is equal to two *padas* (=30 *aṅgulas*). (15)

प्राग्वशः षोडशप्रक्रमायाम इत्यादिषु प्रक्रमप्रमाणं द्विपदं विद्यात् ।

द्वौ प्रादेशावरत्निः ॥ (१६)

Two *prādeśas* are one *aratni* (=24 *aṅgulas*). (16)

उदक् सप्तविंशत्यरत्नय इत्यादिषु द्वौ प्रादेशावरत्निरिति विद्यात् । एतेषामपि परस्परसंबन्धोऽन्वेषणीयः ।

अथाप्युदाहरन्ति ॥ (१७)

In this matter the following rule too is given. (17)

पक्षान्तरमिदम् ।

पदे युगे प्रक्रमेऽरत्नावियति शम्यायां च मानार्थेषु यथाकामीति ॥ (१८)

There is liberty regarding, the length of *pada, yuga, prakrama, aratni* and *śamyā*, if these words denote measures. (18)

अत्र कात्यायनः । द्वादशाङ्गुलं पदं चत्वारोऽष्टकाः शम्येति च । आपस्तंबः । प्रक्रमो द्विपदस्त्रिपदो वेति ।

पदादिषु मानार्थेषु चोदितेषु लोकसिद्धैः शास्त्रान्तरोक्तैश्च विकल्पन्ते । तत्रापस्तंबः । यजमानस्याध्वर्योर्वैष हि चेष्टानां कर्ता भवतीति ।

पंचारत्निः पुरुषः ॥ (१९)

Five *aratnis* are one *puruṣa* (=120 *aṅgulas*) (19)

पुरुषमात्रेण विमिमीत इत्यादिषु पञ्चारत्निं पुरुषं विद्यात् ।

व्यामश्च ॥ (२०)

A *vyāma* has the same length. (20)

व्याममात्रौ पक्षौ इत्यादिषु व्यामश्च पञ्चारत्निः ।

चतुररत्निर्व्यायाम ॥ (२१)

A *vyāyāma* has the length of four *aratnis* (=96 *angulas*) (21)

व्यायाममात्री भवतीतिगार्हपत्यचितेरित्यादिषु चतुररत्निर्व्यायाम ।

चतुरस्रं चिकीर्षन्यावच्चिकीर्षेत्तावतीं रज्जुमुभयत पाशा कृत्वा मध्ये लक्षण करोति लेखामालिख्य ॥ (२२)

If you wish to make a square take a cord of the length which you desire to give to the side of the square make a tie at both its ends and a mark at its middle then having drawn the line (i e the *prācī* the line pointing to the east and west points the different methods by which this line was found will be discussed later) (22)

प्राचीज्ञानोपाया कर्मान्त उक्ता । कृत्तिका खल्विमा प्राची दिश न परिजह्रति तासा सदर्शनेनमापयेदित्येतदेक श्रोणासदर्शनेन मापयेदित्येतदेक चित्रास्वात्योरन्तरालेन मापयेदित्येतदपरमिति । एतानि लक्षणानि देशविशेषेषु व्यवतिष्ठन्ते । सर्वदेशसाधारण कात्यायन आह । समे शकु निखाय शङ्कुसमितया रज्ज्वा मण्डल परिलिख्य यत्र लेखयो शङ्क्वग्रच्छाया निपतति सा प्राचीति । लेखयोरिति मण्डललेखयोरित्यर्थ ।

षडङ्गुलपरीणाह द्वादशाङ्गुलमुच्छ्रित ।
जठर चाव्रण[1] चैव शङ्कु कुर्याद्विशेषत ॥
एकतक्ष[2] ऋजुस्तीक्ष्ण खादिर सम आयत ।

---

1 A B जठर ह्यव्रण C जठर चा० The above ślokas occur in the *Śulbapariśiṣṭa* ascribed to Kātyāyana The Berlin MS of this pariśiṣṭa reads जरज corrected by a second hand into जठर, a MS belonging to the Library of the Benares College reads जठर the same reading is found in anothe MS containing this pariśiṣṭa together with a commentary by Mahīdhara The Śloka is quoted also in the *Śulbavārtika* by Rāma son of Sūryadāsa who comments on Kātyāyana there we find जरढ चा० corrected into जठर चा० ।

2. The reading is doubtful A एकतह्णुश्रं जु० B. एकतक्षुश्रं जु० C एकत हणुऋजु० the MS of the *Śulbapariśiṣṭa*. एकतक्षु ऋ० Possibly we have to read एकत क्ष्णुऋजु० Compare अन्यत क्ष्णुत् उभयत-क्ष्णुत् ।

शङ्कु समशिरा कार्यस्तस्यार्धं[1] गमयेन्महीम् ॥
इति शङ्कुलक्षणम् ।

तस्या मध्ये शङ्कु निहन्यात्तस्मिन्पाशौ प्रतिमुच्य लक्षणेन मण्डल परिलिखेत् विष्कम्भान्तयो शङ्कू निहन्यात् ॥ (२३)

Fix a pole in the middle of that line having fastened at that pole the two ties of the cord describe (around the pole) a circle with the mark (As the mark divides the length of the cord the circle is to be described with half the length of the cord) fix poles at both ends of the diameter (i e diameter formed by the *prāci*) (23)

पूर्वापरीभूता लेखा विष्कम्भ । तस्या मण्डलसगमो विष्कम्भान्त । अथ दक्षिणोत्तरदिग्ज्ञानार्थमाह ।

पूर्वस्मिन्पाश प्रतिमुच्य पाशेन मण्डल परिलिखेत् ॥ (२४)

Having fastened one tie at the eastern pole (the pole fixed at the east end of the *prāci*) describe a circle with the other tie (i e with the full length of the cord) (24)

पाशौ रज्ज्वन्त प्रतिमोचनसमर्थ ।

एवमपरस्मिंस्ते यत्र समेयातां तेन द्वितीय विष्कम्भमायच्छेत् ॥(२५)

In the same manner a circle is described round the pole at the west end of the *prāci*, then a second diameter is drawn joining the points in which these two circles intersect (this diameter is the line pointing to the north and south points) (25)

मत्स्यमुखपुच्छानुसारेण लेखा कुर्यादित्यर्थ ।

विष्कम्भान्तयो शङ्कू निहन्यात् ॥ (२६)

Fix a pole at both ends of the diameter (26)

दक्षिणोत्तरलेखाया प्रथममण्डलस्य च सगमो विष्कम्भान्त ।

अथ कोणदिक्परिज्ञानोपायार्थमाह ।

पूर्वस्मिन्पाशौ प्रतिमुच्य लक्षणेन मण्डल परिलिखेत् ॥ (२७)

1 The MSS of the *Śulbaparisiṣṭa* read सादिर समशयत । शङ्कु कार्यस्तु शुल्वशैस्तस्यार्धं ।

Having fastened both ties at the east pole, describe a circle round it with the mark. (See Sutra 23). (27)

इत उत्तर मध्यमण्डलचिह्नानि लक्षणीकृत्योच्यते ।

एवं दक्षिणत एव पश्चादेवमुत्तरतस्तेषां येऽन्त्याः संसर्गास्तच्चतुरस्रं संपद्यते ॥ (२८)

The same is to be done in the south, the west, and the north (i e, circles are to be described round the three other poles); the points of intersection of these four circles which (i e., the points) are situated in the four intermediate regions (north-east, north-west etc.) are the four corners of the required square. (28)




Figure: 1 (Adhyāya 1, Sūtra 28)

अन्त्या अवान्तरदिक्षु । उपायान्तरमाह ।

(शु० मी०) तेषां मण्डलानां येऽन्त्यास्संसर्गा अवान्तरदिक्षु संयोगास्तेष्वपि शङ्कुन्निहन्यात् । तेषामष्टानां शङ्कूनां समप्रदेशश्चतुरस्रं क्षेत्रं संपद्यत इत्यर्थः ।

अथापरम् ॥ (२९)

Another method of making a square is the following : (29)

करणमिति शेषः ।

प्रमाणाद् द्विगुणांऽरज्जुमुभयतः पाशां कृत्वा मध्ये लक्षणं करोति ॥ (३०)

Make two ties at the ends of a cord, the length of which is double the measure (of the side of the required square), and make a mark in its middle (30)

द्वादशाङ्गुलप्रमाणा द्विगुणां चतुर्विंशत्यङ्गुलप्रमाणा रज्जुमुभयतः पाशां कृत्वा मध्ये लक्षण करोति ।

स प्राच्यर्थः ॥ (३१)

This piece of the cord (i.e, half of the cord) gives us the *praci* (of the required square, the *praci* of a square has the same length as its side) (31).

प्राच्यर्थः पार्श्वमानीपरिज्ञानार्थः खण्डः ।

अपरस्मिन्नर्धे चतुर्भागोने लक्षणं करोति ॥ (३२)

Make a mark of the western half of the cord less the fourth part (of the half) (32)

If we wish, for instance, to make a square the side of which is 12 *padas* long we take a cord 21 *padas* long ; stretching the cord on the ground towards the east and west, we find its middle by a measurement beginning from the western end and having fixed point which lies at the distance of twelve *padas* from the western end, we measure three *padas* back (proceeding from the middle towards the western end) and make at the point we arrive at a mark ; this mark divides the cord into two parts of 15 and 9 *padas* length

उपरिक्षिप्तद्वादशाङ्गुले । अर्धचतुर्भागोने त्र्यङ्गुलेऽनीते आदित आरभ्य पञ्चदशाङ्गुल इति यावत् ।

तन्न्यञ्छनम् ॥ (३३)

The name of this mark is *nyañchana* (33)

अपसारकम् ।

अर्धेऽपसार्यम् ॥ (३४)

Another mark is to be made at the half (of the western half of the cord) in order to fix by it the corners of the square.

(literally the shoulders, i e, the two eastern corners of the square or originally of the *vedi*, the term "*ansa*" implies here the '*froni*", the two western corners) (34)

This second sign is at a distance of 18 *padas* from the eastern end of the cord

आदितोऽष्टादशाङ्गुलेंऽसार्थम् । (शु०मी०) अंसग्रहण श्रोण्युपलक्षणम् ।

पृष्ठ्यान्तयो पाशौ प्रतिमुच्य न्यंछनेन दक्षिणापायम्यार्थेन श्रोण्यं-सान्निहंरेत् ॥ (३५)

Having fastened the two ties at the two ends of the *pṛṣṭhya*-line, one takes the cord at the nyañchana-mark and stretches it towards the south, the four corners of the square are then fixed by the half (i e, by the mark described in S 34) (35)

*Pṛṣṭhya* the "line marking the backbone", denotes the same thing as *prāci*, the expression has its origin in the comparison of the *vedi* with an animal or human body which occurs repeatedly in the *Brāhamaṇas*

If we proceed as the sūtra directs us, a triangle is formed by the prāci and the two parts of the cord, which are separated by the *nyañchana*, the length of its three sides is 12p, 9p and 15p. as $12^2+9^2=15^2$, the triangle is a rectangular one and the eastern and western sides of the square which are found by repeating four times the process taught in the sutra (i e by stretching the *nyañchana* towards the north east, south-east &c) cannot but stand at right angles on the *prāci* In this way the square becomes a perfect one

अभीष्टक्षेत्रायामसमिता सर्वमानेपूभयत. पाशा प्राची द्वौ पूर्वापरयो शङ्क्वोर्निहंता भवति सेवमध्ये भवतीति पृष्ठ्या । सम्प्रसार्य षडङ्गुलेन श्रोण्यसान्निहंरेत् । कुर्यात् । एतत्करणद्वय समचतुरस्रविषयम् ।

(३६) दीर्घचतुरस्रं चिकीर्षन्यावच्चिकीर्षेत्तावत्यां भूमौ द्वौ शंकू निहन्यात् ॥

He who wishes to make an oblong is to fix two poles on an area of length which he intends to give to the oblong (i e, at the two ends of the *prāci* of that area (36)

अभीष्टक्षेत्रायामपृष्ठ्यान्तयो. ।

द्वौ द्वावेकैकमभितः समौ ॥ (३७)

On both sides, i e, on the west and east sides of both these poles two other poles are to be fixed at equal distances (37)

अभित. पश्चात्पुरस्ताच्च समान्तरालौ ।

यावती तिर्यङ्मानी तावतीऽरज्जुमुभयतः पाशां कृत्वा मध्ये लक्षणं करोति। पूर्वेषामन्त्ययो पाशौ प्रतिमुच्य लक्षणेन दक्षिणापायम्य लक्षणे लक्षणं करोति ॥ (३८)

Taking then a cord of the length one intends to give to the sideline of the oblong, one makes ties at both its ends and a mark at its middle Then one fastens the two ties at those two of the three eastern poles which stand at the outside stretches the cord towards the south, holding it by the mark and makes on this mark (i e at the place where the mark touches the ground after the cord has been stretched) a mark (38)

पृष्ठ्यान्तयोस्त्रय शङ्कव । अन्त्ययो. त्रयाणा पाश्चात्यपोरन्त्ययो ।

मध्यमे पाशौ प्रतिमुच्य लक्षणस्योपरिष्टाद्दक्षिणापायम्य लक्षणे शंकुं निहन्यात् ॥ (३९)

Then fastening both ties at the middle pole, one stretches the cord over the mark (on the ground) towards the south and fixes a pole on the mark (i e, on the spot touched by the mark on the cord) (39)

उपरिष्टात् समीपेन।

सोऽंस एतेनोत्तरोऽंसो व्याख्यातस्तथा श्रोणी ॥ (४०)

That is the southern *aṅsa* i e the south-east corner of the oblong, thereby are explained likewise the northern *aṅsa* and the two *fronts* (the uttara *aṅsa* is found by stretching the cord towards the north, the two *fronts* by fastening the cord at the western poles and stretching it at first towards the south and then towards the north) (40)

The process described in S 38 serves for drawing the east- and west side of the oblong at right angles on the *praci*; Sūtra 39 teaches how to give to these two sides the required length. There was no real reason for restricting the above method to the drawing to oblongs All the methods of *caturasrakaraṇa* and *dirghacaturasrakaraṇa* which the Sūtras contain are in reality nothing but methods for drawing a line at right angles on another and each of them can be employed equally well for squares and for oblongs

यत्र पुरस्तादऽहीयसीं मिनुयात्तत्र तदर्धे लक्षणं करोति ॥ (४१)

If one wishes to give a shorter measure to the eastern side (of a *caturasra*, tiryaṅmānīm is to be supplied) one makes a mark at half (the tiryaṅmāni) (41)

यत्राहीयसीमेकतोऽग्निमश्चिकीर्षति । तदर्थं चिकीर्षिताग्निमस्तिर्यङ्मान्यर्धं ।

अथापरं प्रमाणाद्ध्यर्धाऽरज्जुमुभयत: पाशौ कृत्वा परस्मिऽस्तृतीये षड्भागोने लक्षणं करोति ॥ (४२)

Another method (of the *caturasrakaraṇa*) is the following Having taken a cord the length of which is equal to one and a half of the length intended for the side of the square, and having made ties at both its ends, one makes a mark on its western third less the sixth part of the third (42)

द्वादशाङ्गुले षडङ्गुलं प्रक्षिप्य पञ्चाङ्गुले लक्षणम् ।

तन्न्यञ्छनम् ॥ (४३)

This is the *nyañchana*-mark (43)
अपसारकम् ।

इष्टेऽऽसार्थम् । पृष्ठ्यान्तयोः पाशौ प्रतिमुच्य न्यंछनेन दक्षिणापायम्येष्टेन श्रोण्यऽसान्निर्हरेत् ॥ (४४)

Another mark which is used for fixing the corners of the square, is to be made at the desired point (at the point marking the length, which one desires to give to the side of the square; *in the example given* by the commentary on Sūtra 43 this point would be at the distance of 6 aṅgulas from the end of the cord). Then having fastened the ties at the two ends of the *prācī* and having stretched the cord towards the south by means of the *nyañchana* one fixes the situation of the four corners by means of the second mark (*iṣṭena*) (44)

पञ्चाङ्गुला तिर्यङ्मानी यथोदशाङ्गुलाद्दणयारज्जुः द्वादशाङ्गुलाक्षणमारज्जुः द्वादशाङ्गुला पार्श्वमानी । इष्टेन इष्टप्रमाणकृतलक्षणेन निर्हरेत् उत्पादयेत् । अथ द्विकरणीमाह ।

The process described in the preceding Sūtras is essentially the same as that described in Sūtras 29-35

The difference is that the Sūtrakāra makes here use of the rectangular triangle the sides of which are 13, 12, 5; while he employed above the rectangular triangle 15 12 9, i.e, 5, 4, 3 An enumeration of all the Pythagorean triangles with which the authors of the Śulbasūtras were acquainted will be given in Sūtra 49

समचतुरस्रस्याक्ष्णयारज्जुर्द्विस्तावतीं भूमिं करोति ॥ (४५)

The cord stretched across a square (i e. in the diagonal) produces an area of the double size (i.e. the square on the diagonal of a square is twice as large as that square) (45)

कर्णरज्ज्वा समचतुरस्रे कृते प्रमाणक्षेत्राद् द्विगुणं भवति ।

अथ त्रिकरणीमाह ।

प्रमाणं तिर्यग् द्विकरण्यायामस्तस्याक्ष्णयारज्जुस्त्रिकरणी ॥ (४६)

Take the measure (the side of a square) for the breadth, the *dvikarani* (i e, the diagonal of that square) for the length (of an oblong), the diagonal of that oblong is the side of a square, the area of which is three times the area of the square. (46)

प्रमाणं द्वादशाङ्गुलं तिर्यक् । तस्य द्विकरणी तिलोनसप्तदशाङ्गुला पार्श्वमानी । एवंभूतस्य दीर्घचतुरस्रस्याक्ष्णयारज्जुर्विंशतिरङ्गुलय. सप्तविंशतिस्तिलाश्च । सा त्रिकरणी प्रमाणविमितक्षेत्रं त्रिगुणं क्षेत्रं करोति ।

तृतीयकरण्येतेन व्याख्याता नवमस्तु भूमेर्भागो भवतीति ॥ (४७)

Thereby is explained that line which is the side of a square, the area of which is the third of the area of a given square, it is the ninth part of the area. (47)

It seems that, in order to find the *trtiyakarani*, we are directed to find at first the *trikarani*: the third part of the *trikarani* is the *trtiyakarani*; for it is the side of a square the area of which is one ninth of the square of the *trikarani* and consequently one-third of the given square This is the method, taught by the commentators of the *Āpastamba's Śulbasutras*, where the above *Sutra* recurs in slightly different words, and it seems indeed to have been the method intended by Baudhāyana too, although his commentator propounds a different explanation:

एतेन न्यायेन तृतीयकरणी व्याख्याता । प्रमाणक्षेत्रं नवधा विभज्य एकभागस्य करणी तिर्यङ्मानी तद्द्विकरणी पार्श्वमानी तस्याक्ष्णयारज्जुस्तृतीयकरणी । प्रमाणपरिमितात् क्षेत्रात्तृतीयं क्षेत्रं करोति । एषा फलकरण्यास्तृतीयभागा । अनेन सूत्रेणेदमपि सूचितं भवति । प्रमाणं तिर्यक् त्रिकरण्यायामस्तस्याक्ष्णयारज्जुश्चतुष्करणी । प्रमाणानि त्रीणि तिर्यग्द्विकरण्यायामस्तस्याक्ष्णयारज्जुरेकादशकरणी । एकादशभेदकरण्येतेन व्याख्याता । विभागास्त्वेकविंशाधिकशतधेत्यर्थः ।

दीर्घचतुरस्रस्याक्ष्णयारज्जुः पार्श्वमानी तिर्यङ्मानी च यत्पृथग्भूते कुरुतस्तदुभयं करोति ॥ (४८)

The diagonal of an oblong produces by itself both the areas which the two sides of the oblong produce separately (i e, the square of the diagonal is equal to the sum of the squares of the two sides), (48)

दीर्घचतुरस्र पार्श्वमान्या समचतुरस्रे कृते यत् क्षेत्र सपद्यते यच्च तिर्यङ्मान्या तदुभयमक्ष्णयारज्ज्वा समचतुरस्रे कृते सपद्यते। त्रिकचतुष्कयो पञ्चिकाक्ष्णयारज्जुरित्याद्युदाहरणम् ।तासा त्रिकरणेऽप्ययमेव प्रकार·। समचतुरस्रविषय. पूर्वसूत्रोक्त.।

त्रिकचतुष्कयोर्द्वादशिकपञ्चिकयोः पञ्चदशिकाष्टिकयो. सप्तिकचतुर्विंशिकयोर्द्वादशिकपञ्चत्रिंशिकयो· पचदशिकषट्त्रिंशिकयोरित्येतासूपलब्धि ॥ (४९)

This is seen in those oblongs the sides of which are three and four twelve and five, fifteen and eight, seven and twenty-four twelve and thirty five, fifteen and thirty six

We should of course say rectangular triangles instead of "oblongs" The length of the diagonals of these oblongs or of the hypotenuses of these rectangular triangles of these oblongs or of the hypotenuses of these rectangular triangl s is not explicitly mentioned by Baudhāyana Āpastamba states it when describ ing the different manners of constructing the vedi

प्रमाण तिर्यगित्येवमादिनावगतानामक्ष्णयारज्जूना त्रिकचतुष्कयोरित्यादिषु दीर्घचतुरस्रकरणीपूपलब्धि ।अवगति ।त्रिकचतुष्कयो पञ्चिकाक्ष्णयारज्जु । पञ्चदशिकषट्त्रिंशिकयोरेकोनचत्वारिंशिकाक्ष्णयारज्जुरित्यादि। एव तासा द्वयोर्ज्ञातयोस्तृतीया ज्ञातु शक्यते। यथा पार्श्वमानीतिर्यङ्मान्योर्ज्ञातयो पृथग्वर्गयित्वासयोज्य वर्गमूलमक्ष्णयारज्जु । तथा पार्श्वमान्यक्ष्णयारज्ज्वोर्ज्ञातयोरक्ष्णयारज्जुवर्गात्पार्श्वमानीवर्गं विशोध्य शिष्टस्य मूल तिर्यङ्मानी। एव तिर्यङ्मानीवर्गं विशोध्य पार्श्वमानी एव सर्वत्र द्रष्टव्यम्।

नाना चतुरस्रे समस्यन्कनीयस· करण्या वर्षीयसो वृध्रमुल्लिखेद्वृध्रस्याक्ष्णयारज्जु समस्तयो पार्श्वमानी भवति ॥ (५०)

चतुरस्राच्चतुरस्रं निर्जिहीर्षन्यावन्निर्जिहीर्षेत्तस्य करण्या वर्षीयसो वृध्रमुल्लिखेत्। वृध्रस्य पार्श्वमानीमक्ष्णयेतरत्पार्श्वमुपसंहरेत्सा यत्र निपतेत्तदपच्छिन्द्यात्छिन्नया निरस्तम् ॥ (५१)

The general meaning of the two preceding Sutras is clear, they show how the knowledge of the geometrical proposition contained in Sutra 48 enables us to form a square, the area of

which is equal to the area of two given squares. But there is one difficult word "*vṛdhra.*" The MSS. (text and commentary) have वृध्र० and वृद्ध by turns, in some places the second corrected into the first; *the same uncertainty as to the right reading is exhibited in* the MS of Āpastamba's *Śulbasūtras* where both Sūtras recur in slightly different words. I give the explanations of the different commentaries before venturing on a translation.

(शु० दी०) नानाकारे समचतुरस्रे समस्यन् ह्रसीयसः करणी तिर्यङ्मानी कृत्वा वर्षीयसः संबन्धिन सकलमुल्लिखेत्। वर्षीयस. करण्येव पार्श्वमानी। एवकृतस्य दीर्घचतुरस्रस्याक्ष्णयारज्जुः समस्तयो. करणी भवति। तदुक्तम्। दीर्घचतुरस्रस्याक्ष्णयारज्जुरित्यादिना। अत्र लघूपायः। बृहच्चतुरस्रकरणीमल्पचतुरस्रकरणी च पृथग्वर्गयित्वा संयोज्य तस्य मूलमानीय तत्प्रमाणया रज्ज्वा समचतुरस्रे कृते उभे चतुरस्रक्षेत्रे समस्ते भवतः।

निर्ह्रारो निरसनम्। यथा त्रिविधाग्नौ क्रियमाणे द्विपुरुषेण चतुरस्रे कृते चतु पुरुषो भवति। तत्रैकत्यागार्थं पुरुषमान्या तिर्यङ्मान्या वृध्रमुल्लिख्येतरस्योत्तरा पार्श्वमानीं दक्षिणप्राचीमितरत्पार्श्वं गमयेत्। सा च तत्र द्विपुरुषप्रमाणाया चत्वारिंशच्छतद्वयाङ्गुलाया पञ्चतिलोनेऽष्टशतद्वयाङ्गुले निपतति। तत पुरस्ताद् द्वात्रिंशदङ्गुलं पञ्चतिलाश्चापच्छिन्द्यात्। परिशिष्टया करण्या चतुरस्रे कृते पुरुषो निरस्तो भवति।

(शु०मी०) नानाप्रमाणके चतुरस्रे द्वे समस्यन् कनीयस अनयोर्मध्य अल्पप्रमाणकस्य चतुरस्रस्य करण्या रज्ज्वा वर्षीयस अधिकप्रमाणस्य चतुरस्रस्य वृद्धमधिकमंशमुल्लिखेत्।

अल्पप्रमाणकस्य करणी तिर्यङ्मानी कृत्वा वर्षीयसः करणी पार्श्वमानी कृत्वा दीर्घचतुरस्रमुल्लिखेदित्यर्थः। वृद्धस्य एवकृतस्य दीर्घचतुरस्रस्याक्ष्णया रज्जु०।

चतुरस्राच्चतुरस्र निर्जिहीर्षन्निति चतुरस्रात् पुरुषचतुष्टयमितक्षेत्रादिकाच्चतुरस्रमेकपुरुषप्रमाणादिक निर्जिहीर्षन्नपोद्धर्तुमिच्छन्यावन्निर्जिहीर्षेत्तस्य करण्यापजिहीर्षितस्य चतुरस्रस्य करण्या पार्श्वमान्या वर्षीयस अधिकस्य वृद्धमुल्लिखेत्। वृद्धस्य महाचतुरस्रस्य करणी तिर्यङ्मानी कृत्वा वृद्धस्य पार्श्वमानी कृतस्य दीर्घचतुरस्रस्य दक्षिणप्राचीकोणादारभ्य पश्चिमोत्तरकोण प्रत्यक्ष्णयाकर्षेत्।

सा एव कृता पार्श्वमानी यत्र प्रदेशे निपतेत् समाप्ता भवति तदपच्छिन्द्यात्।

Kapardisvāmin, one of Āpastamba's commentators gives the following explanation :

वृध्र दीर्घमुल्लिखेत् । यथाल्पीयस करणी तिर्यङ्मानी वर्षीयस करणी पार्श्वमानी तथा दीर्घचतुरस्रमुल्लिख्य ।

All the three commentators are aware of the right method for the *samāsa* and *nirhāra* of squares, but they apparently were at a loss what to do with the word *vṛdhra* or *vṛddha* The explanation of the *Dīpikā* is quite obscure, Kapardisvāmin has no right to explain *vṛdhra* by *dīrgha* and *dīrgha* by *dīrghacaturasra*, the *Śulbamīmāṃsā* manages to give a sort of explanation by reading *vṛddha* and selecting an example which suits that reading, but the insufficiency of this explanation appears as soon as we take another example and deduct for instance a square the area of which is one *puruṣa* from a square of twelve *puruṣas*, for then the oblong to be cut off is not *vṛddha* ' i e. larger than the rest, but on the contrary much smaller

Of the commentators known to me, there is one left who gives the right explanation although without accounting for it Karavindasvāmin, who comments on Āpastamba I subjoin his words

नानाप्रमाणयोश्छिन्नप्रमाणयोश्चतुरस्रयोस्समासकरण्युच्यते । कनीयस अल्पीयसश्चतुरस्रस्य करण्या करणीप्रमाणेन वर्षीयसो महतश्चतुरस्रस्य वृध्र छिन्नमेकदेशमुल्लिखेत् । वृध्रस्य छिन्नस्याक्ष्णयारज्जुरुभे नाना प्रमाणे चतुरस्रे समस्यति एकीकरोति । तदुक्तं भवति । नानाप्रमाणे चतुरस्रे समस्येत् । अल्पीयसश्चतुरस्रस्य करण्या प्रमाणेन महतश्चतुरस्रस्यैकस्या तिर्यङ्मान्यामपच्छिन्द्यात् । महतश्चतुरस्रादल्पचतुरस्र निर्जिहीर्षन्निर्हर्तुमिच्छन्यावत्प्रमाण चतुरस्रमपनेतुमिच्छति तस्याल्पस्य करण्या महतश्चतुरस्रस्यैकदेश यथा छिन्न भवति तथोल्लिखेत् । एवं कृते निरसितव्यक्षेत्रप्रमाणतुल्य तिर्यङ्मानीक महत्क्षेत्रपार्श्वमानीप्रमाणपार्श्वमानीकं दीर्घचतुरस्र भवति । तस्य क्षेत्रस्यैका पार्श्वमानीमक्ष्णयेतरस्पार्श्वमुपसहरेत् गमयेत् ।

सा पार्श्वमान्यक्ष्णयोपसहृता यत्रेतरस्या पार्श्वमान्या प्रदेशे निपतति तत्र तां पार्श्वमानीमपच्छिन्द्यादपच्छिद्याधिक त्यजेत् ।

Following the explanation given by Karavindasvāmin I derive '*vṛdhra* from the root *vardh* (*Dhātupāṭha* 32 iii *vardha chedanapūraṇayoḥ*) from which a number of well known words are derived (*vardhaka*, *vardhaki* etc ) and translate the two Sūtras as follows

समचतुरस्रं दीर्घचतुरस्रं चिकीर्षंस्तदक्ष्णयापच्छिद्य भागं द्वेधा विभज्य पार्श्वयोरुपदध्याद्यथायोगम् ॥५२॥

If you wish to turn a square into an oblong, divide it by the diagonal ; divide again one of the two halves into two parts and join these two parts to the two sides (those two sides of the other half which form the right angle) as it fits (i.e. when joining them join them with those sides which fit to the *pārśvau*). (52).

महादिक्षु यथा स्रक्तयो भवन्ति तथा समचतुरस्रं कृत्वा चतुरस्रं पूर्वापरमपच्छिद्य दक्षिणभागार्धं द्वेधा विभज्याक्ष्णया दक्षिणोत्तरमपच्छिद्य एकं चतुर्भागमुत्तरापरकोणेऽन्तर्दीर्घपार्श्वमुत्तराप्रत्यगग्रमुपदध्यात् । अपरं चतुरस्रार्धभागमुत्तरपूर्वकोणेऽन्तर्दीर्घपार्श्वमुत्तरपूर्वाग्रमुपदध्यात् । पार्श्वयोः पूर्व-पश्चिमयोरुपसदध्यात् । अन्यश्चप्रकारः । यावदिच्छं पार्श्वमान्यौ प्राच्यौ वर्धयित्वा उत्तरपूर्वां कर्णरज्जुमायच्छेत्सा दीर्घचतुरस्रमध्यस्थायां समचतुरस्रतिर्यङ्मान्यां यत्र निपतति तत उत्तरं हित्वा दक्षिणांशं तिर्यङ्मानीं कुर्यात् । तद्दीर्घचतुरस्रं भवति । दीर्घस्य दीर्घकरणेऽप्ययमेव प्रकारः । समचतुरस्रविषयः पूर्वसूत्रोक्तः ।

अपि चैतस्मिंश्चतुरस्रे समस्य तस्य करण्यापच्छिद्यायदतिशिष्यते तदितरत्रोपदध्यात् ॥५३॥

I do not venture on a translation of this Sutra, as it does not clearly appear to what geometrical operation it refers. Moreover, there seems to be a lacuna in the commentary, which gives but the following words ·

दीर्घचतुरस्रं कृत्वा यदतिशिष्यते अनन्तर्भूतं भवति यत् क्षेत्रं तदितरत्र दीर्घचतुरस्रस्य पूर्वपार्श्वे पश्चिमपार्श्वे चोपदध्यात् ।

It remains to remark that the geometrical rule contained in Sūtra 52 is a very unsatisfactory one as it enables us to turn a square into one sort of oblong only, viz., that one the longer side of which is equal to the diagonal of the square. The commentary on the other hand (*anyat ca prakārah*, etc.) gives a rule by which a square may be turned into any oblong we like.

दीर्घचतुरस्रं समचतुरस्रं चिकीर्षंस्तिर्यङ्मानीं करणीं कृत्वा शेषं द्वेधा विभज्य पार्श्वयोरुपदध्यात् खंडमागन्तुनेन तत्संपूरयेत्तस्य निर्हार उक्तः ॥५४॥

If you wish to turn an oblong into a square take the *tiryanmāni*, i e, the shorter side of the oblong for the side of a square, divide the remainder (that part of the oblong which remains after the square has been cut off) into two parts and inverting (their places) join those two parts to two sides of the square (We get thus a large square out of one corner of which a small square is cut out as it were) Fill the empty place (in the corner) by adding a piece (a small square) It has been taught how to deduct it (the added piece) (54)

By adding the small square in the corner we get a large square which is equal to the oblong plus the small square, therefore we must deduct the small square, from the large square (see Sūtra 51) and then we have as remainder a square which is equal to the oblong

तिर्यङ्मानीप्रमाणेन पार्श्वमानीमपच्छिद्य समचतुरस्रं कृत्वा शेषं विभज्य पुरस्तादुत्तरतश्चोपदध्यात् । यथोत्तरपूर्वकोणेऽस्य चतुरस्रागन्तुखण्डो भविष्यति । तस्य निर्हारः । चतुरस्राच्चतुरस्रमिति । तदीशानकोणक्षेत्रमित्यर्थः ।

चतुरस्रमेकतोऽणिमच्चिकीर्षन्नणिमतः करणीं तिर्यङ्मानीं कृत्वा शेषमक्ष्णया विभज्य विपर्यस्येतरत्रोपदध्यात् ॥५५॥

If you wish to make a square smaller on one side, take the side of the smaller (square i e, a side of the lessened length which you intend to give to one side of the square) for the *tiryanmāni* (of an oblong, i e cut from the square an oblong the shorter side of which has the length you want to give to the side of the square) Divide the remainder (the oblong which remains after the first oblong has been cut off) by the diagonal and join (the two triangles which you get by dividing the remaining oblong) to the two long sides (of the first oblong) inverting them (their position) (55)

अणिमत्पार्श्वस्य करणीं तिर्यङ्मानीकरणीं कृत्वा प्रमाणपार्श्वमानीवमणिमत्पार्श्वतिर्यङ्मानीकं दीर्घचतुरस्रं कृत्वावशिष्टं क्षेत्रमक्ष्णया परिच्छिद्य एकं तत्रैव स्थापयित्वा परमादाय विपर्यस्य पार्श्वान्तरे उपदध्यात् ।

चतुरस्रं प्रउगं चिकीर्षन्यावच्चिकीर्षेद् द्विस्तावतीं भूमिं समचतुरस्रां कृत्वा पूर्वस्याः करण्या मध्ये शङ्कुं निहन्यात्तस्मिन्पाशौ प्रतिमुच्य दक्षिणोत्तरयोः श्रोण्योर्निपातयेद्बहिःस्पन्द्यमपच्छिन्द्यात् ॥५६॥

If you wish to turn a square into a triangle make a square the area of which is twice as large as the area of the triangle you wish to make, fix a pole in the middle of the eastern side, fasten at that pole two ties (two cords) and stretch the cords towards the southern and northern śroni of the square; cut off that part of the square which lies outside the cords (i.e., the two triangles lying to the north-east of the two cords). (56)

प्रउगं शकटमुखम् । द्विकरण्या समचतुरस्रं कृत्वा पूर्वस्यास्तिर्यङ्मान्या मध्ये शङ्कु निहत्य तस्मिन्पाशौ प्रतिमुच्य चतुरस्रश्रोण्योर्निपातयेत् । स्पन्द्ययोर्बहिर्भूतमपच्छिन्द्यात् । निरस्येत् ।

*Prauga*, the fore part of a chariot pole, is word used in the *Śulbasutras* to denote a triangle. Only in one passage of Āpastamba the word *tryasra* occurs.

चतुरस्रमुभयतः प्रउगं चिकीर्षन्यावच्चिकीर्षेद् द्विस्तावतीं भूमिं दीर्घचतुरस्रां कृत्वा पूर्वस्याः करण्या मध्ये शङ्कुं निहन्यात्तस्मिन्पाशौ प्रतिमुच्य दक्षिणोत्तरयोर्मध्यदेशयोर्निपातयेद्बहिःस्पन्द्यमपच्छिन्द्यादेतेनापरं प्रउगं व्याख्यातम् ॥५७॥

He who wishes to turn a square into a double *prauga* (i.e., a figure formed by two *praugas* joined with their bases) is to make an oblong of twice the intended area and to fix a pole in the middle of its eastern side; having fastened at that pole two ties (cords) he is to stretch the cords towards the middle of the southern and northern side (of the oblong) and to cut off those parts (of the oblong) which lie outside the two cords; thereby the western *prauga* too is explained (i.e., the western half of the *ubhayatah-prauga* is found by fixing a pole in the middle of the oblong's western side and stretching from there two cords towards the middle of the southern and northern side). (57).

द्विस्तावतीं प्रमाणतिर्यङ्मानीकां द्विप्रमाणपार्श्वमानीकां दीर्घचतुरस्रां कृत्वा पूर्वस्याः करण्या मध्ये शङ्कुं निहत्य तस्मिन् पाशौ प्रतिमुच्य दक्षिणोत्तरयोः पार्श्वमान्योर्मध्यदेशयोः स्पन्द्यौ निपातयेत् । बहिःस्पन्द्यं निरस्येदेतेन प्रकारेणापरं प्रउगं व्याख्यातम् ॥

चतुरस्र मडल चिकीर्षन्नक्ष्णयार्धं मध्यात्प्राचीमभ्यापातयेद्यदतिशिष्यते तस्य सह तृतीयेन मडल परिलिखेत् ॥५८॥

If you wish to turn a square into a circle draw half of the cord stretched in the diagonal from the centre towards the *praci* line (i e stretch a cord from the centre of the square to one of the corners for instance to the north east corner and move then the loose end of the cord towards south until the cord covers the *praci* the line running from the centre of the eastern side of the square to the centre of the western side a piece of the cord will then of course lie outside the square) describe the circle together with the third part of that piece of the cord which stands over (i e take for radius of the circle the whole piece of the cord which lies inside the square plus the third part of the piece which lies outside) (58)

चतुरस्रस्याक्ष्णयार्धं चतुरस्रमध्यादारभ्य कोटया निपात्य चिह्न कृत्वा चतुरस्रस्य पूवपाश्वमध्ये प्राची निपात्य चिह्न कृत्वा चिह्नयोरन्तराल त्रधा विभज्य एकभागसहितेन चतुरस्रार्धेन मण्डल परिलिखत्। सानित्या मण्डल करोति।

मडल चतुरस्र चिकीर्षन्विष्कम्भमष्टौ भागान्कृत्वा भागमेकोनत्रिंशधा विभज्याष्टाविंशतिभागानुद्धरेद् भागस्य च षष्ठमष्टमभागोनम् ॥५९॥

If you wish to turn a circle into a square divide the diameter into eight parts and one of these eight parts into twenty-nine parts of these twenty nine parts remove twenty eight and moreover the sixth part (of the one left part) less the eigth part (of the sixth part) (59)

The meaning is $\frac{7}{8}+\frac{1}{8\,29}-\frac{1}{8\,29\,6}+\frac{1}{8\,29\,6\,8}$ of the diameter of a circle is the side of a square the area of which is equal to the area of the circle This rule for turning a circle into a square is the reverse of the preceding rule for turning a square into a circle it is based on the remarkably accurate numerical expression for the relation of the diagonal of a square to the side of a square which will be given in Sutra 61

भागस्योद्धृतशिष्टस्य षष्ठं कीदृशं स्वीयाष्टमभागोनम्। कस्मादुद्धरेत्। उद्धृताष्टविंशतिभागात्। एतदुक्तं भवति। विष्कम्भमष्टधा कृत्वैकं भागं द्विनवतिशतत्रयाधिकसहस्रभागान्कृत्वा तेषामेकचत्वारिंशद्भागान्विष्कम्भभागसप्तके संयोज्य एकपञ्चाशच्छतत्रयाधिकसहस्रभागान्कृत्वा तेषामेकं भागं जह्यादित्यर्थः।

**अपि वा पंचदशभागान्कृत्वा द्वावुद्धरेदेषानित्या चतुरस्रकरणी॥ (६०)**

Or else divide (the diameter) into fifteen parts and remove two, that is the gross side of the square. (60)

एषा परिशिष्टत्रयोदशभागप्रमाणा अनित्या स्थूला चतुरस्रकरणी। अनयोरनित्यत्वं ज्ञायते गणितविरोधात् परस्परविरोधाच्च। तथाहि। सप्तविधस्य सारत्निप्रादेशस्याग्नेः क्षेत्रं लक्षमष्टौ च सहस्राण्यङ्गुलयः। १०८०००।

तस्य चतुरस्रीकृतस्य करणी त्रीणि शतान्यष्टाविंशतिश्चाङ्गुलयोऽर्धद्वाविंशाश्चतिलाः। ३२८ अं० २१.५ ति०।

तस्मिन्नुक्तेन मार्गेण मण्डलीकृते त्रीणि शतानि चतुःसप्ततिश्चाङ्गुलयो विष्कम्भो भवति। ३७४। तस्य परिणाहः सहस्रं पञ्चसप्ततिशतं चाङ्गुलयः। ११७५। यथाहुः। चतुरधिकं शतमष्टगुणं द्वाषष्टिस्तथा सहस्राणां आयुतद्वयविष्कम्भस्यासन्नो वृत्तपरिणाह इति। तस्य मण्डलस्य फलं लक्षं नवसहस्राण्यष्टौ शतानि षष्टिश्चाङ्गुलयो दृश्यन्ते। उक्तं च। समपरिणाहस्यार्धं विष्कम्भार्धहतमेव वृत्तफलम्। एवमग्निक्षेत्रे रथचक्राद्यै मण्डलीकृते। परस्परविरोधः। अर्धद्वाविंशतितिलसहितस्याष्टाविंशतिशतत्रयाङ्गुलिकरणीकस्याग्नेर्मण्डलीकृतस्य विष्कम्भश्चतुःसप्ततिशतत्रयाङ्गुलयुक्तः। तस्यैव मण्डलस्योक्तेन मार्गेण चतुरस्रकरणी त्रीणि शतानि चतुर्विंशतिश्चाङ्गुलयोऽर्धपञ्चमाश्च तिलाः करणी भवति। पूर्वोक्तायाः करण्याः सार्धाश्चतस्रोऽङ्गुलयो हीयन्ते। तस्मात्सूक्ष्ममिच्छता चतुरस्रस्य मण्डलकरणे सूत्रोक्तादतिशयतृतीयसहिताद्विष्कम्भार्धादष्टादशशतांशस्त्याज्यः। एवंकृते रथचक्रचितौ विष्कम्भः पदतिलोनैकसप्ततिशतत्रयाङ्गुलयो भवन्ति। ३७०.२८.। परिणाहश्च पञ्चषष्टिः शतसहस्राङ्गुलयः। ११६५। अस्य मण्डलस्य समपरिणाहस्येत्यादिना पूर्वोक्तेनानीतं फलं लक्षमष्टौ च सहस्राणि भवन्ति। १०८०००। मण्डलस्यापि चतुरस्रकरणे सूत्रोक्तविष्कम्भश्च स्यात्त्रिगुणात्त्रयस्त्रिंशच्छतांशं युञ्ज्यात्। द्विकरण्युक्ता। तस्या ज्ञानोपायमाह।

प्रमाणं तृतीयेन वर्धयेत्तच्च चतुर्थेनात्मचतुस्त्रिंशोनेन ॥ (६१)

Increase the measure by its third and this third by its own fourth less the thirty-fourth part of that fourth. (61)

If we take 1 for the measure and increase it as directed, we get the following expression: $1+\frac{1}{3}+\frac{1}{3 \cdot 4}-\frac{1}{3 \cdot 4 \cdot 34}$

This is the numerical formula which the authors of the *Śulbasūtras* had found for relation of the diagonal of the square to the side of the square. Turning the expression into a decimal fraction, we get 1.414256...Then taking 1 for the measure of a square's side, we have of course the square-root of two as the measure of the square's diagonal. The square-root of two is 1.414213... Comparing the two decimal fractions, we see that the value the sūtrakāras had found comes up remarkably close to the true value. According to the custom of the class of writings called *sūtras*, the method by which the result was obtained is not stated. It would take too much space to discuss the question in this place; I shall show elsewhere that it is possible to trace the steps by which Baudhāyana (or whoever may have the merit of the first investigation) arrived at fixing the value of the *saviśeṣa*.

द्वादशाङ्गुल चतुरङ्गुलेन वर्धयेत् । तत्तृतीयं स्वीय चतुर्थेन स्वचतुस्त्रिंशांशानेन तिलोनेनैकाङ्गुलेन वर्धयेत् । एवं तिलोनसप्तदशाङ्गुला भवति ।

सविशेषः ॥ (६२)

The name of this increased measure is *saviśeṣa*. (62)

तस्य सविशेष इत्यपि संज्ञा ।

अथाग्न्याधेयिकेविहारः ॥ (६३)

In the following the measurements required for the construction of the sacrificial fires will be treated. (63)

अथेत्यधिकारे ।

गार्हपत्यादाहवनीयस्यायतनम् ॥ (६४)

The place for the *āhavanīya*-fire is to be found by starting from the *gārhapatya*-fire. (and measuring towards the east). (64)

गार्हपत्यात् गार्हपत्यस्य पुरस्तात् ।

विज्ञायते ॥ (६५)

In this matter the following tradition holds good. (65)

अन्तरालमधिकृत्य श्रुतिरवगम्यते ।

अष्टासु प्रक्रमेषु ब्राह्मणोऽग्निमादधीतैकादशसु राजन्यो द्वादशसु वैश्यः ॥ (६६)

The Brāhmaṇa has to construct the (*āhavanīya*) fire at the distance of eight *prakramas* (to the east from the gārhapatya) the Rājanya at the distance of eleven, the Vaiśya at the distance of twelve. (66)

अष्टासु प्रक्रमेष्वन्तरालभूतेष्वित्यर्थः एवमुत्तरयोरपि कल्पयोः । द्वादशसु विक्रमेष्वग्निमादधीतेति सार्ववर्णिकः । चक्षुर्निमित आदधीतेति दण्डादिना माननिषेधः । इयदष्टौ प्रक्रमा इयदेकादश इयद्द्वादशेति चक्षुषा यावन्त देशं परिच्छिनत्ति तस्यावधेः समीप आधेय इत्यर्थः ।

आयामतृतीयेन त्रीणि चतुरस्राण्यनूचीनानि कारयेदपरस्योत्तरस्यां श्रोण्यां गार्हपत्यस्तस्यैव दक्षिणेंऽसेऽन्वाहार्यपचनः पूर्वस्योत्तरेंऽस आहवनीय इति ॥ (६७)

With the third part of the length (of the distance between *āhavanīya* and *gārhapatya*) he is to make three squares following upon each other (touching each other), the place of the *gārhapatya* is in the north-west corner of the western square, the place of *anvāhāryapacana* (or *dakṣiṇa agni*) in the south-east corner of the same square; the place of the *āhavanīya* in the north-east corner of the eastern square. (67)

पूर्वोक्तगार्हपत्याहवनीयमध्ययोरन्तरालायामतृतीयकरणीप्रमाणेन त्रीणि चतुरस्राण्यनूचीनानि प्राञ्चि पश्चिमस्य पुरस्ताद् द्वितीय द्वितीयस्य पुरस्तात्तृतीयमिति कारयेत् । अपरस्य चतुरस्रस्योत्तरस्यां श्रोण्यां गार्हपत्यमध्यशङ्कुः । धिष्ण्यानां द्विप्रादेशो विष्कम्भ इति वक्ष्यति । तस्मिन्प्रादेशेन मण्डलं परिलिखेत् । पृथिवीसस्त्वान्मण्डलाकृतिर्गार्हपत्यः । तस्यैवापरस्य दक्षिणेंऽसेऽन्वाहार्यपचनमध्यशङ्कुः । मण्डलं चतुरस्रं चिकीर्षन्नित्यादिनानीतनवतिलसहितैकविंशत्यङ्गुलचतुरस्रद्विकरण्या चतुस्तिलसहितत्रिंशदङ्गुलयो समचतुरस्रं कृत्वा मण्डलं कृत्वा दक्षिणविहारविष्कम्भश्चतुस्त्रिंशदङ्गुलयो दश तिलाश्च । दक्षिणविहारमध्येशङ्कोरुत्तरतोविष्कम्भचतुर्भागमात्रे शङ्कुं स्थापयित्वा तस्मिन्विष्कम्भार्धं प्रति-

मुच्य मण्डलं परिलिख्य मण्डलमध्ये प्राक्प्रतीची स्पन्द्या नियम्यानुस्पन्द्यं लेखामालिख्य उत्तरार्धं त्यजेत्सोऽन्वाहार्यपचनः। अन्तरिक्षसंस्तवाद्धनुराकृतिः। पूर्वस्योत्तरस्याः श्रोण्या उत्तरेणोत्करः। पूर्वस्य चतुरस्रस्योत्तरस्य आहवनीयमध्यशङ्कुः। तस्य नवतिलसहितैकविंशत्यङ्गुल चतुरस्रं कुर्यात्। द्युलोकसंस्तवाच्चतुरस्र आहवनीयः। आगारो वा। सभायामेव सभ्य व्यपदिशेत्। आवसथ आवसथीयमिति। अपि वा पक्षः। आयामवृतीये नेत्यादिसदं कल्पोक्तेन विकल्पते। दक्षिणाग्न्यायतनदेशविकल्पार्थमाह्।

**अपि वा गार्हपत्याहवनीययोरन्तरालं पंचधा षोढा वा संभुज्य षष्ठं सप्तमं वा भागमागन्तुकमुपसमस्य सम त्रेधा विभज्य पूर्वस्मादन्त्याद् द्वयोर्भागयोर्लक्षणं करोति। गार्हपत्याहवनीययोरन्तौ नियम्य लक्षणेन दक्षिणायाम्य लक्षणे शङ्कुं निहन्ति तद्दक्षिणाग्नेरायतनं भवति॥ (६८)**

Or else divide the space between *āhavanīya* and *gārhapatya* either into five or into six parts, add a sixth or seventh part (according to the division you have preferred) and divide the whole into three parts; then measuring from the pole standing at the east end (*śankoh* has apparently to be supplied, *antat* would be preferable to *antyāt*; but all MSS. have the latter reading) make a sign at the second part (the sign is of course to be made on a cord), fasten the two ends of the cord at the (poles marking the centre of the) *gārhapatya* and the *āhavanīya*, stretch the cord towards south taking it at the mark and fix a pole on the spot which the mark touches; this is the place of the *dakṣiṇa agni*. (68)

सभुज्य सवेष्ठ्यागन्तुकमधिकं प्रक्षिप्य समं सर्वं द्वयोर्भागयोरिति। तयोर्गार्हपत्याहवनीयमध्यशङ्क्वोर्दक्षिणाग्नेरायतन मध्य भवति। विपर्यस्योत्कर।

**अपि वा प्रमाणं पंचमेन वर्धयेत्तत्सर्वं पंचधा संभुज्यापरस्मादन्त्याद् द्वयोर्भागयोर्लक्षणं करोति पृष्ठ्यान्तयोः पाशौ प्रतिमुच्य लक्षणेन दक्षिणापायम्य लक्षणे शङ्कुं निहन्ति तद्दक्षिणाग्नेरायतनं भवति॥ (६९)**

Or else increase the measure by its fifth, divide the whole into five parts and make a mark at the end of two parts, measuring from the western end, fasten the ties at the ends of the *pṛṣṭhya* line and stretch the cord towards the south taking it by the mark; fix a pole at the place touched by the mark. This is the place of the *dakṣiṇa agni*. (69)

लक्षणे शङ्कुं निहन्ति । पूर्वस्मादन्त्याद् भागत्रयेऽतीते ।
विपर्यस्यैतेनोत्करो व्याख्यातः ॥ (७०)

Thereby the *utkara* is explained ; only the cord has to be stretched the opposite side (the north). (70)

पूर्वोत्तरकल्पयोः साधारणमिदम् । दक्षिणतो विपुवत्यन्वाहार्यपचनस्येति कल्पोक्तोऽप्यनुसंधेयः । तथा सति उत्तरतो मध्य उत्करः ।

अपरेणाहवनीयं यजमानमात्री भवतीति दार्शपौर्णमासिकाया वेदेर्विज्ञायते ॥ (७१)

"It is to the west of the *āhavanīya*, of the measure of the sacrificer" this is the tradition for the *vedi* of the *darśapūrṇamāsa*-sacrifice. (71)

The *prachi* of this *vedi* is 96 *angulis* long.

यजमानमात्री षण्णवत्यङ्गुला । तस्या मानमाह ।

तस्यास्त्रिभागोनं पश्चात्तिरश्ची तस्या एवार्धं पुरस्तात्तिरश्च्येवं दीर्घचतुरस्रमेकतो ऽणिमद्विहृत्य स्रक्तिषु शङ्कून्निहन्यात् ॥ (७२)

The western side (of this *vedi*) is of that length less a third part (96—32=64), the eastern side of half the length (48 *ang.*) ; thus having made an oblong which is shorter on one side (see Sūtra 55) poles are to be fixed on its four corners. (72)

त्रिभागोनं चतुःषष्ट्यङ्गुलानि । तस्या एवार्धमष्टाचत्वारिंशदङ्गुलानि ।

अष्टषष्टिशते सूत्रे चतुर्विंशे निरञ्छनम् । द्वात्रिंशे चतुःसप्तत्यां संख्येयान्यङ्गुलानि तु ॥

षण्णवत्यङ्गुला पृष्ठ्या प्रथमेनांसयोर्मितिः ।

श्रोण्योर्द्वितीयेन मानमेवमेकतः······ ॥

तस्या नमनमाह ।

यावती पार्श्वमानी द्विरभ्यस्ता तावतीं रज्जुमुभयतः पाशां कृत्वा मध्ये लक्षणं करोति दक्षिणयोः पाशौ प्रतिमुच्य लक्षणेन दक्षिणापायम्य लक्षणे शङ्कुं निहन्यात् । तस्मिन्पाशौ प्रतिमुच्य लक्षणेन दक्षिणं पार्श्वं परिलिखेत् ॥ (७३)

Take a cord the length of which is double the length of one of the long sides of the *vedi* (northern and southern sides), make

ties at both its ends and a mark at its middle, fasten the ties at the two southern poles (the poles standing on the south-east and south-west corners of the *vedi*), stretch the cord towards the south, having taken it by the mark and fix a pole on the mark. Then fastening both ties at this pole, draw the cord with the mark round the southern side of the *vedi*. (73)

The cord being fastened with both ties at the pole and being thus doubled up is stretched to the south-east corner of the *vedi* and then moved towards west, until it touches the south-west corner. Of course the middle of the cord, marked by the *lakṣaṇa*, describes in the way a part of a circle. This forms then the southern side of the *vedi* taking the place of the straight line which joins the *dakṣina aṁśa* and the *dakṣina śroṇi*.

यावती दक्षिणपार्श्वमानो परिलिखेत् । दक्षिणायाः श्रोणेर्दक्षिणमंसमालिखेत् ।

**एतेनोत्तरं पाश्वं व्याख्यातम् ॥ (७४)**

Thereby the northern side is explained. (74)

यावती पार्श्वमानीत्यादिना ।

**पूर्वं पाश्वं तया द्विरस्तया परिलिखेदेवमपरम् ॥ (७५)**

In the same way the east and west-side are to be circumscribed with a cord of the double length. (75)

तिर्यङ्मान्योरपि द्विगुणीकृत्य मध्ये लक्षणं कृत्वा श्रोण्यंसयोश्चान्तौ नियम्य पश्चात्पुरस्ताच्चपच्छिन्द्यादिति द्रष्टव्यम् । अपरिमिता वा यथा सन्नानि हवींषि संभवेदेवं तिरश्ची प्राञ्चीवेद्यंसावुन्नयति प्रतीची श्रोणी पुरस्तादंहीयसी पश्चात्प्रथीयसी मध्ये संनततरा भवतीति कर्मान्ते पक्षान्तरमप्यस्ति तदप्यनुसंधेयम् । अपरिमिता षण्णवत्यङ्गुलादधिका । यथा सन्नानि हवींषि संभवेत् । प्रकृतिषु संगृह्णीयात् । प्राञ्चौ वेद्यंसावुन्नयति । आहवनीयस्य परिग्रहणाय । प्रतीची श्रोणी । गार्हपत्यस्य परिग्रहणाय । पुरस्तात् श्रोणीप्रमाणात् संकुचिता । पश्चादंसप्रमाणाद्वितता । मध्येऽतिकृशा । दक्षिणोत्तरायतं गार्हपत्यागारम् । आहवनीयागारं पूर्वापरायतम्, तत्र वेदिकरणात् । आहवनीयस्य पुरस्तात्त्रिप्रक्रममवशिष्य सभ्यागारम् । एवमावसथीयस्य गृहम् । यावति कृष्णमृग उपविशेत् तावदपरार्धोर्ध्वंगते विहार इति कर्मान्त उक्तम् ।

**दशपदा पश्चात्तिरश्ची द्वादशपदा प्राच्यष्टापदा पुरस्तात्तिरश्चीति पाशुबन्धिकाया वेदेर्विज्ञायते । मानयोगस्तस्या व्याख्यातः ॥ (७६)**

पक्षाग्रयोर्दक्षिणत उत्तरतस्ताभ्यां संश्लिष्टानि सर्वतस्त्रिंशदङ्गुलानि पञ्च चतुरस्राणि प्रागपवर्गाणि कृत्वावाञ्च श्रवाग्यथा भवति तथा-क्ष्णयावच्छिन्द्यादर्धान्युद्धरेत् ।

एवमुभयत्र पञ्च चतुर्थ्यो भवन्ति ।

एवं ७ सारत्निप्रादेशः सप्तविधः संपद्यते ।। (८६) (२५)

Thus the seven fold agni with the two *aratnis* and the *pradeśa* is brought about (86) (25)

The area of the falcon *citi* described in the preceding amounts indeed again to $7\frac{1}{2}$ square *puruṣas* It is impossible to retrace in all cases the steps by which the *adhvaryus* arrived at their results which were most likely oftener obtained by repeated trying than by calculation The commentator expresses in this case the area of the agni throughout by *caturthi* bricks and it is possible that the priests really took as many *caturthis* as there are contained in the *caturasra śyena citi* and tried to form with them new figures

एवं पक्षात्मशिरः पुच्छेषु विभक्तेष्वरत्निक्षेत्राभ्यां प्रादेशक्षेत्रेण सह सप्तविधः पुरुषः संपद्यते । अर्धाष्टमपुरुषोऽग्निर्भवतीत्यर्थः । एवं सर्वत्र । अत्रात्मनि सार्धपञ्चत्रिंशच्चतुर्थ्यः । शिरस्यर्धपञ्चमा । पुच्छे पञ्चदश । दक्षसु पक्षेषु पञ्च । पक्षयोः षष्टिः । एवं विंशत्यधिकं शतं षोडश्यः । पुरुषक्षेत्रे षोडश षोडश्यः क्षेत्रे । एवं सर्वत्र द्रष्टव्यम् ।

उपधाने शिरसोऽप्यये चतुर्थीमुपदध्यात् ।। (८७) (२६)

When placing the bricks a *caturthi* is to be placed there where the head is joined (to the *ātman*) (87) (26)

A square brick the side of which=30 *aṅgulis* is placed in the centre of the western part of the head so as to touch with its western side the line in which head and *ātman* join

सर्वत्राप्ययशब्देन पक्षपुच्छशिरसामात्मसंगतः प्रदेशो विधीयते । शिरसोऽप्यये मूलप्रदेश इत्यर्थः । अविशेषान्मध्ये पार्श्वयोरुभयत्र पञ्चदशाङ्गुलमपरिशिष्य ।

हंसमुखीं पुरस्तात् ॥ (८८) (२७)

To the east (of the *caturthi*) a *hansamukhi* is to be placed. (88) (27)

One of the five-cornered bricks described in the Sutra 68.

पुरस्तात् चतुर्थ्याः पुरस्तात् प्रागग्रां हंसमुखीमुपदध्यात्।

पादेष्टके अभितः ॥ (८९) (२८)

On both sides (of the *hansumukhi*) a quarter brick is placed. (89) (28)

On those two sides of the *hansamukhi* which are turned towards the south-east and the north-east one of the triangular bricks described in the Sutra 64 is placed.

हंसमुख्या अभितः प्रत्यगग्रे। अग्रप्रदेशेन संश्लिष्य दीर्घपार्श्वे पादेष्टके उपदध्यात्।

तयोरवस्तादभितस्तिस्रस्तिस्रश्चतुरस्रपाद्याः ॥ (९०) (२९)

To the west of these two (triangular quarter-bricks are to be placed on both sides (of the *caturthi* and *hansamukhi*). (90) (29)

तयोरुपहितयोः पादेष्टकयोरवस्तात् पश्चात्। अभितः चतुर्थीहंसमुख्योरभितः। तिस्रस्तिस्रश्चतुरस्रपाद्या उपदध्यात्। उभयत्र हंसमुखीपश्चिमान्तेन तुल्यां बहिर्दीर्घपार्श्वां प्रागग्रामेकैकामुपधाय तयोः पश्चात्पञ्चदशाङ्गुलव्यासत्रिंशदङ्गुलक्षेत्रे द्वे द्वे यथायोगमुपदध्यात्।

शेषे पादेष्टकाः ॥ (९१) (३०)

In the remainder (of the head) quarter-bricks are to be placed. (91) (30)

The triangle forming the top of the head has been left uncovered up to the present; four triangular quarter-bricks are required to cover it.

शिरसः शेषे पादेष्टकाः। सामर्थ्याच्चतस्र इत्यर्थः। तत्र शिरोऽग्रहंसमुख्यग्रयोर्मध्ये प्रागग्रप्रत्यगग्रे (द्वे ?)।
प्रत्यगग्रपार्श्वयोरभितः प्रागग्रे द्वे। एवं चतुर्दशेष्टकाः शिरस्युपहिता भवन्ति।

अपि वा शिरसोऽग्रे हंसमुखीमुपदध्यात्तस्या अवस्ताच्चतुर्थीमुपदध्या-त्पादेष्टके अभितस्तयोरवस्तादभितस्तिस्रस्तिस्रश्चतुरस्रपाद्याःशेषे पादेष्टका ॥(९२) (३१)

Or else a *hansamukhi* brick is placed in the top of the head, a *caturthi* to the west of it, a (triangular) quarter-brick on each side, to the west of rach of those (triangular quarter-bricks) three four cornered quarter-bricks ; the remainder is to be covered with (triangular) quarter-bricks. (92) (31)

The remainder is in this case a square 30 *angulis* to the west of the *caturthi*, which is covered with four triangular quarter-bricks.

शिरसोऽग्रे हंसमुखीमुपधाय तस्याः पश्चाच्चतुर्थीमुपधाय तयोरभितः पादेष्टके दक्षिणोत्तराग्रे अभ्यन्तरदीर्घपार्श्वे उपधाय तयोः पश्चात्पश्चिमा-न्तसंगते चतुरस्रपाद्ये बहिर्दीर्घपार्श्वे प्रागग्रे उभयत उपधाय तयोः पश्चा-त्पदव्यासप्रक्रमदीर्घपूर्वापरचतुरस्रक्षेत्रे द्वे द्वे चतुरस्रपाद्ये उपधाय तयो-र्युगलयोर्मध्येऽवशिष्टचतुर्भागीयाक्षेत्रे चतस्रः पादेष्टका इति । प्रथमपर उपधानकल्पः ।

अत्रापि शिरसि चतुर्दश: ।

By the *agra* of rectangular triangles, the right angle is meant.

शिरसोऽवस्तात्पञ्च पादेष्टका व्यतिषक्ता उपदध्यात् ॥ (९३) (३२)

To the west of the head, five triangular quarter-bricks are to be placed mutually joined with each other. (93) (32)

Three of them are turned towards the east, two towards the west.

व्यतिषक्ता व्यत्यस्ता दक्षिणोत्तराभिः । द्वितीया चतुर्थ्यौ प्रत्यगग्रे । इतराः प्रागग्राः ।

तथा पुच्छस्य पुरस्तात् ॥ (९४) (३३)

The same is to be done at the east side of the tail (there too five triangular quarter-bricks are to be placed). (94) (33)

पादेष्टका पञ्च व्यतिषक्ताः । अत्र द्वितीयाचतुर्थ्यौ प्रागग्रे । इतराः प्रत्यगग्राः ।

यद्यदपच्छिन्नं तस्मिन्नर्धेष्टका पादेष्टकाश्चोपदध्यात् ॥ (९५) (३४)

Wherever something has been cut off there half bricks and quarter bricks are to be placed (95) (34)

This rule refers to those sides of the *agnikṣetra* which had been formed by cutting off the corners of oblongs (*ātman* and tail) or by cutting out pieces (wings and *patras* of the wings) Thus it refers in fact to the whole outline of the *citi* with the only exception of the western side of the tail and northern and southern sides of the head It will appear from the commentary and from the sketch of the *citi* where half-bricks are to be placed and where quarter bricks

अपच्छेदेष्वन्यासामसम्भवात् । सिद्धस्य वचनमर्ध्याभिश्चाभि पाद्याभि-रुपधानार्थम् । तत्र शिरसि आत्मपूर्वापरान्ते पूर्वमेवोपहिता पादेष्टका । अनेन सूत्रेण पुच्छपूर्वान्ते पार्श्वयोर्द्वे द्वे पादेष्टके । निर्णामान्तयोरपच्छेदेषु चतुरस्रश्चतस्र पाद्या । अन्यत्रार्धेष्टा ।

शेषमग्निं चतुर्भागीयाभि प्रच्छादयेत् ॥ (९६) (३५)

The remainder of the agni is to be covered with *caturthī*-bricks (96) (35)

अत्र चतुर्भागीयाभिरेवेति न नियम्यते । ताभि पूरयितुमशक्य-त्वात् ।

पाद्याभि साध्याभि सख्यां पूरयेत् ॥ (९७) (३६)

Finally the number of two hundred bricks is to be made full with quarter-bricks and half bricks (97) (36)

When we have placed the bricks mentioned in the Sūtras preceding to BSl III 93 which amount altogether to sixty eight (14 in the head, 5 on the eastern and 5 on the western margin of the *ātman* and 44 situated on the periphery of the agni) there is room left for 91 *caturthīs* As, however 68+91 is only 159, and as 200 bricks are required, *ardhyas* and *pādyas* must be substituted to a certain number of *caturthīs* Thus instead of four *caturthīs* in the tail sixteen *pādyas* are employed seven *caturthīs* in each wing are replaced by 28 *ardhyas* four *caturthīs* by 16 *pādyas*, two *ardhyas* in the tail by 4 *pādyas* and lastly the *caturthī* in the centre of the *citi* by two *ardhyas* Thereby the number of the bricks is raised to 200 The exact places where these substitut-

ions had to be made are given by the commentary and may be seen in the diagram of the citi

(If one uses only *caturthi* (i e, square) bricks, for covering the citi, the number 200 will not be reached. Total number of bricks has to be two hundred, this number is made up by using a certain number of *ardhyas* (half-bricks) and a certain number of



Fig 6 Vakrapakṣaśyenaciti First kind, Prastāra I
(Adhyāya IV Sutra 9,)

*pādyas* (quarter-bricks) This is done in the following way Leaving the head outside there are 12 rows including the tail (proceeding from tail onwards to the head) In the first row in the tail we have 6 *caturthis* and 2 *ardhyās* one on each end, i e, 8 bricks in all In the second row, we have 2 *ardhyās* (one on each end) and 16 *pādyas* or quarter bricks i e, 18 bricks in all In the third row, 2 *caturthis* in middle and 4 *pādyās* on the corners (two on each corner) i e 6 bricks in all In the fourth row, we have 5 *pādyās* i e 5 bricks in all In the fifth row, we have 2 *ardhyās* in the corners and 3 *caturthis* in the middle i e 5 bricks in all Then we have 5 rows of five *caturthis* each with the exception that the central one in the eighth row is of two *ardhyas* i e 26 bricks in all This completes the tail and *ātman* up to the tenth row The eleventh row is like the fifth (two *ardhyas*

and three *caturthis*) i e 5 bricks in all. Then we have 5 *pādyas* or quarter-bricks (as in the fourth row) The head has 14 bricks

This makes the total

8+18+6+5+5+26+5+5+14 = 92

Then on both the wings we have the *patras* of 5 *ardhyas* each i e 10 *ardhyas* for two set of *patras* In the wings we have 6 rows In the right wing (adjacent to the row of *patras*) we have 4 *caturthis* and 2 *ardhyas* in the first column then again 4 *caturthis* and 2 *ardhyas* in the second column In the third column we have 8 *ardhyas* and 4 *pādyas* i e total 12 bricks in all In the fourth column again we have 8 *ardhyas* and 4 *pādyas* i e 12 bricks in all In the fifth column we have 3 *caturthis* and 4 *ardhyas* making 7 bricks in all In the sixth column we have 4 *caturthis* and 2 *ardhyas* Thus in all in the 6 columns of the right wing we have (including 5 *patras*) the total

5+6+6+12+12+7+6 = 54 bricks in all

Similarly on the left wing we have 54 bricks

Thus in all we have 92+54+54 = 200 bricks

चतुर्थीभि प्रच्छादिते द्विशतसख्या न पूर्यते । तत्राध्यासहिताभि पाद्याभि सख्या द्विशतसख्या पूरयेत् । तत्रैवपमुधानम् । शिरोवर्जं पुच्छेन सहात्मन्युदीच्यो द्वादशरीतय । तत पुच्छाग्र मध्यत षट् चतुथ्य पार्श्वयोरर्ध्ये । द्वितीयरीत्या पार्श्वयोरर्ध्ये मध्ये षोडश पाद्या । तृतीयस्या मध्ये द्वे चतुर्थ्यौ पार्श्वयोर्द्वे द्वे पाद्य । चतुर्थ्यां पञ्च पाद्या पूर्वोक्ता पञ्चम्या पार्श्वयोरर्ध्ये मध्ये तिस्रश्चतुर्थ्य । तत पञ्चसु पञ्च पञ्च चतुर्थ्य । तत्राष्टम्या मध्यामुद्धृत्य द्व अर्ध्ये । पञ्चमीवदेकादशी । तत पूर्वोक्ता पञ्च पाद्या । शिरसि चतुर्दश पूर्वमेवोक्ता । पक्षयो पत्राणि पञ्चार्ध्या । तत्र दक्षिणपक्षस्था प्रागुत्तरविशेषा । विपरीता इतरा । तत्र पक्षयो प्राच्य षट् षड् रीतय । तत्र दक्षिणे पक्ष दक्षिणादारभ्य मध्ये चतस्रश्चतुर्थ्य पश्चात्पुरस्ताच्चार्ध्ये । एव द्वितीया । तृतीयस्यामादित सप्तार्ध्या उपधाय ततो दक्षिणपूर्वकर्णामध्यमिकामुपधाय ततश्चतस्र पाद्या सहिताग्रा उपदध्यात् । एव चतुर्थी रीति । पञ्चम्यामादितोऽर्ध्या ततस्तिस्रश्चतुर्थ्यस्ततोऽर्ध्यात्रयम् । दक्षिणारीतिवत् षष्ठी रीति । एवमुत्तर पक्ष । एव षट्चत्वारिंशदात्मनि । शिरसि चतुर्दश । द्वात्रिंशत्पुच्छ । पक्षयोरष्टशतम् । अस्मिन्प्रस्तारे नवषष्टिश्चतुर्थ्य । अर्ध्या द्वासप्तति । पाद्या द्विपञ्चाशत् । षट् चतुरस्रपाद्या । एकाहममुखो । एष द्विशत प्रस्तार ।

अपरस्मिन्प्रस्तारे हंसमुखीश्चतस्रश्चतसृभि पादेष्टकाभिः संयोजयेद्यथा दीर्घचतुरस्रं संपद्यते तत्तिर्यक् स्वयमातृण्णावकाश उपदध्यात् ॥ (९८) (३७)

In the second layer four *hansamukhis* are to be combined with four triangular quarter bricks in that way that they form together an oblong, this oblong is to be placed sideways on the spot of the *svayamātṛnna* (98) (27)

एवं कृत्वोपदध्यादिति विवक्षितम्। ईदृग्रूपा इष्टका उपदध्यादित्यर्थः। तत्रैवमुपधानम्। स्वयमातृण्णावकाशमध्य गृहीत्वा पदत्रयव्यास प्रक्रमद्वयदीर्घं दीर्घचतुरस्र दक्षिणोत्तर बुद्ध्या परिकल्प्य चतुरस्रपूर्वपार्श्वे प्रत्यगग्रे द्वे हंसमुख्यौ पश्चिमपार्श्वे प्रागग्रे द्वे हंसमुख्यौ। तासां मध्ये दक्षिणोत्तराग्रे अन्तर्दीर्घपार्श्वे पादेष्टके। चतुरस्रदक्षिणोत्तरपार्श्वयोर्मध्यभूतान्तरालयोर्बहिर्दीर्घपार्श्वे दक्षिणोत्तराग्रे द्वे पादेष्टके। एवमष्टेष्टकं दीर्घचतुरस्रं भवति।

हंसमुख्यौ प्रतीच्यौ पुच्छाप्ययेऽर्धपदेनात्मनि विशये ॥ (९९) (३८)

Two *hansamukhis* turned towards the west are to be placed there where *ātman* and tail are joined in that way that the half *pada* is situated in the *ātman* (99) (38)

A *hansamukhi* may be supposed to be divided into two parts a triangle and an oblong of 30 *angulis* by 7½ *agulis* (=¼ *pada*) The triangular part of the two *hansamukhis* mentioned in the *Sūtra* lies in the tail the oblong part in the *ātman*

पुच्छात्मसंधौ द्वे हंसमुख्यौ प्रत्यगग्रे। अर्धपदमात्रेणोपलक्षितो योऽवयव स आत्मनि यथा भवति तथोपदध्यात्। विशयशब्दार्थमाहापस्तम्ब। प्रथमात्मन्यर्धपक्ष इति। तत्राधशब्दस्योभयत्रस्थित्युपलक्षणत्वादेकदेशोऽपि गृह्यते।

तयोरवस्तादभितस्तिस्र पादेष्टका प्राङ्मुखीरुपदध्यात् ॥ (१००) (३९)

To the west and both sides of these two *hansamukhis*, three triangular quarterbricks are to be placed their tops (right angles) turned towards the east (100) (39)

तयोर्हंसमुख्यो पश्चादभितो दक्षिणतश्चोत्तरतश्च प्रागग्रा पादेष्टकास्तिस्र उपदध्यात्। हंसमुख्यो पश्चात्प्रत्यग्दीर्घपार्श्वा प्रागग्रा। हंसमुख्योरप्राप्त्या सहिता उपदध्यादित्यर्थः।

पुच्छस्यावस्तात्पञ्चदश पादेष्टका व्यतिषक्ता उपदध्यात् ॥ (१०१)
(४०)

At the west side of the tail, fifteen triangular quarter-bricks joined with each other are to be placed (101) (40)

The tops of eight of them are turned towards the east, those of the seven towards the west.

पुच्छाग्रे पञ्चदश पादेष्टकाभिरेका रीतिः । तत्र प्रागग्रा अष्टा पादेष्टकाः । प्रत्यगग्रा सप्त ।

पादेष्टके अर्धेष्टकेति पक्षपत्राणा प्राचीर्व्यत्यासं चिनुयात् ॥ (१०२)
(४१)

In the *patras* of the wings by turns two triangular quarter bricks and one half brick are to be placed from the west towards the east. (102) (41)

द्वे पादेष्टके । एकार्धेष्टका । एव यावन्ति पत्त्राणि व्यत्यस्य पुनरपि पादेष्टके इत्यादिनोपदध्यात् । तत्र प्रथमपश्चिमपत्राग्रे प्रागग्रा पाद्या तस्या उत्तरत प्रत्यगग्रा पाद्या तस्या पुरस्तादुत्तरपूर्वदीर्घबाह्यकर्णा पादेष्टका दीर्घपार्श्वेन प्रक्रमेण सगतामर्धेष्टकामुपदध्यात् । एव पञ्चपत्रेपूपधानम् ।

विशये यदपरिच्छिन्नं तस्मिन्नर्धेष्टकाः पादेष्टकाश्चोपदध्यात् ॥ (१०३)
(४२)

At the places where the *atman* is joined to the wings and those places where something has been cut off, half bricks and quarter bricks are to be placed (103) (42)

विशये पक्षात्मसधिषु निर्णामाद्यास्तेषु यदपच्छिन्न क्षत्र तस्मिन्नर्धेष्टका पादेष्टकाश्च यथासभवमुपदध्यात् । विशय उक्तार्थ ।

शेषमग्नि चतुर्भागीयाभिः प्रच्छादयेत्पाद्याभिः साध्याभि सख्या पूरयेत् ॥ (१०४) (४३)

The rest of the agni is to be covered with *caturthis* and then the number to be made full with quarter bricks and half-bricks (104) (43)

पूर्वमेव व्याख्यात । तत्रैवमुपधानम् । पुच्छे विशयस्यरीत्या सहोदीच्यश्चतस्रो रीतय. । तत्र प्रथम पुच्छाग्रे पञ्चदश पादेष्टका पूर्वमुक्ता. ।

ततः पूर्वस्यां मध्ये पञ्च चतुर्थ्यः पार्श्वयोरर्ध्ये । तृतीयस्यां मध्ये तिस्रश्च-तुर्थ्यः पार्श्वयोरर्ध्ये । सप्तरीत्यां प्रागग्रास्तिस्रः पादेष्टकाः ।



Fig. 7. *Vakrapakṣa Śyenacit*, First kaṇḍ, Prastara II
(Adhyāya IV, Sūtra 104)

तासां पुरस्तात्प्रत्यगग्रं हंसमुखीद्वयं व्यतिषक्तमुपदध्यात् । एवं पञ्चेष्टका सप्तरीतिः । तत्रात्मनि पक्षयोश्च प्रागायता अष्टादशरीतयः तत्रा-त्ममध्यमे रीती शिरसा सह ।

तत्रात्ममध्यमरीत्योर्दक्षिणोच्यते । पूर्वं पुच्छात्मसंधिरीत्यां दक्षिणतः प्रत्यगग्रमुपहिताया हंसमुख्याः पुरस्तात् तिस्रश्चतुर्थ्यः । ततः प्रागग्रा हंसमुखी पूर्वहंसमुख्या अग्रेणाग्रसंगता । तयोर्मध्ये दक्षिणत उत्तरतश्चोदग्दक्षिणाग्रे पादेष्टके । एवमुपहितचतुष्टयस्य पुरस्तात्तिस्रश्चतुर्थ्यः । ततः पञ्चार्धेष्टकाः । एवं पञ्चदशेष्टकारीतिः ततो दक्षिणस्यां चतुर्दशार्धेष्टकाः । ततः पक्षात्म-विषयरीत्यां पश्चादर्धेष्टका । ततश्चतस्रश्चतुर्थ्यः । ततः सप्त मध्यतः प्रागग्रा पाद्या । पार्श्वयोर्दक्षिणोत्तराग्रे द्वे पादेष्टके । एवं पाद्यात्रयमग्रेण संगतं भवति । एवमष्टेष्टका सप्तरीतिः । तस्या दक्षिणतो रीतिद्वयेनाष्टौ चतुर्थ्यः । पार्श्वयोश्चतस्रोऽर्धेष्टकाः । निर्गमरीत्यामादौ मध्यतः प्रत्यगग्रा पादेष्टका । तस्या दक्षिणत उत्तरतश्चोदग्दक्षिणाग्रे द्वे पादेष्टके । एवं पाद्यात्रयमग्रसंगतं भवति । ततश्चतस्रश्चतुर्थ्यः । तत एका पाद्या प्रागग्रा । एवमष्टेष्टका रीतिः ।

ततो रीतिद्वयेनाष्टौ चतुर्थ्यं । पार्श्वयोश्चनस्र अर्ध्या । तयोदक्षिणा रीति पवं सह पूर्वमेवोक्ता पञ्च दशेष्टकात्मिका । उत्तरपार्श्वस्याप्येवमुपधानम् । एव पुच्छे द्वात्रिंशदिष्टका । अष्टपञ्चाशदात्मशिरसो । पक्षयोदशशतम् । अस्मिन्प्रस्तारेऽप्टपष्टिचतुर्थ्यं । अर्धेष्टका सप्तति । पद् पञ्चाशत्पादेष्टका । हृसमुख्य पट ।

The sketch of the prastāra will be the best *illustration* of the commentary

According to the *Sūtras* 98 102 58 bricks had been placed *Sutra* 103 directs us to place *ardhyas* and *pādyās* on the outer circumference of the agni there where something had been cut off accordingly two *ardhyās* are required for the top of the head four *ardhyās* for the north and south side of the tail 26 *ardhyās* and 6 *pādyās* for wings and *ātman* together (by employing *pādyās* only there where they are absolutely necessary) After which there is room left for 84 *caturthis* But as these together with the before mentioned 96 brickrs give only 180 16 *caturthis* are divided into 32 *ardhyās* (180 16+32=196) and the number made finally full by replacing four *ardhyās* by eight *pādyas* (196−4+8=200)

These *pādyās* a e situated at the west end of the two *pakṣa nirnāmaniti* and the east end of the two *ātmapakṣasandhiniti*

अथोत्तमेव श्येनचित प्रकारान्तरेणाह ।

अथापर ॥ (१०५) (४४)

Now another (kind of the falcon *citi* will be described) (105) (44)

अथ शब्द पूर्वेण सबन्धार्थं । ये पूर्वस्योक्ता धर्मा असापच्छेदनादय अस्यापि ते भवन्तीति । अपर । प्रकार ।

श्येनाकृतेरपर प्रकारो वक्ष्यत इत्यर्थं ।

पुरुषस्य पञ्चमीभि शतमशीति सप्तार्धं च सारत्निप्रादेश सप्तविध सपद्यते ॥ (१०६) (४५)

One hundred and eighty seven and a half (square bricks) the side of which is equal to the fifth part of a *puruṣa*=24 *angulis* compose the seven fold agni together with the two *aratnis* and the *prādeśa* (106) (45)

One square-*purusa* contains twenty-five such bricks therefore $7\frac{1}{2}$ square *purusa* $= 187\frac{1}{2}$ pañcamis

पञ्चमचर्ये तृतीया। पुरुषस्य पञ्चमीनामिष्टकानां शतमशीतिश्च सप्त चार्धेष्टका च सारत्निप्रादेश सप्तविध सपद्यते। पुरुषक्षेत्रे पञ्चविंशति पञ्चम्य शेरते। अर्धपुरुषक्षेत्रेऽर्धत्रयोदश। एव सारत्नि। ताभिरिष्टकाभिरात्मपक्षपुच्छशिरसा मानमाह।

तासा पञ्चाशद् द्वे चात्मनि ॥ (१०७) (४६)

Fifty two of these bricks lie in the *ātman* (127) (46)

That means the preliminary area of the *ātman* of this second kind of the *śyena citi* has to be made equal to the area of 52 *pañcamis*, there are no real *pañcamis* employed for the construction of the agni (The same remark applies to the following *sūtras*) The *ātman* is drawn at first in the form of an oblong of 240 *angulis* length (from the east towards the west) by 144 *angulis* breadth

उपदध्यादिति शेष। एव सर्वत्र। सामर्थ्यादात्मक्षेत्र षडरत्निविस्तार द्विपुरुषायाम दार्घचतुरस्र भवति। तत्र षष्टि पञ्चम्य शेरते। अर्धव्यायामेन स्रक्तीनामपच्छेद इति वक्ष्यते। एव श्रोण्यसेषु द्वाभ्या द्वाभ्यामरत्निभ्यामपच्छेदने कृतेऽरत्न्यष्टक निरस्त भवति। शेषा. पञ्चाशद् द्वे च भवन्ति।

अर्धचतुर्था शिरसि ॥ (१०८) (४७)

Three and a half (*pañcamis*) are situated in the head (108) (47)

As in the first kind of the *vakrapakṣa śyena* an oblong of 54 *angulis* by 48 *angulis* is drawn for the head

पूर्ववच्छिर स्थानेऽरत्निद्वयव्याम चतु पञ्चाशदङ्गुलायाम दीर्घचतुरस्र विहृत्याकृति शिरसो निरुेति वक्ष्यमाणत्वादिहारत्नौ पूर्वश्येनप्रक्रमभक्ति कृत्वा पूर्वस्या करण्या मध्याद्दक्षिणोत्तरयोररत्निमात्रे पूर्वभागे निपातयेत्। एवमर्धचतुर्था पञ्चम्यो भवन्ति।

पञ्चदश पुच्छे ॥ (१०९) (४८)

Fifteen in the tail (109) (48)

ऽरत्निविस्तारमष्टारत्निदीर्घमुदगायतं चतुरस्रं कृत्वा पूर्वस्येनव-त्प्रक्रमस्थाने त्रिभिस्त्रिभिररत्निभिरसमपच्छिन्द्यात् । पञ्चदश पञ्चम्य. शेरते ।

अष्टपञ्चाशत्सार्ध्या दक्षिणे पक्ष उपदध्यात् ॥ (११०) (४९)

Fifty-eight and a half *pañcamıs* are to be placed in the southern wing (110) (49)

An oblong of 216 *angulis* (from the north towards the south) by 144 *angulis* is drawn on the southern side of the agni, this represents the wing before it is bent and before the *patras* have been added and comprises fifty-four *pañcamıs*

पक्षस्थाने षडरत्निविस्तारं नवारत्न्यायाममुदगायतं दीर्घचतुरस्रं विहृत्य पक्षयोस्त्रिभिस्त्रिभिररत्निभिरपनाम इति वक्ष्यमाणत्वात् त्रिभिरर-त्निभि पक्षनमनम् । चतु पञ्चाशत्पञ्चम्य शेरते । अध्यर्धाध्यर्धाभिः षट् षट् पत्त्राणि कुर्यादिति वक्ष्यमाणत्वात् पक्षाग्रेऽध्यर्धाभि॰ षट् चतुरस्राणि कृत्वा पूर्ववदवाञ्चमक्ष्णयापच्छिन्द्यात् । एव पत्रेष्वर्धपञ्चमा पञ्चम्य. शेरते । एव-मष्टपञ्चाशत्सार्ध्या दक्षिणे पक्ष उपदध्यात् ।

तथोत्तरे ॥ (१११) (५०)

In the same way in the northern wing (fifty-eight *pañcamıs* are to be placed). (111) (50)

अष्टपञ्चाशदित्यनुवर्तते ।

अर्धव्यायामेन स्रक्तीनामपच्छेद॰ ॥ (११२) (५१)

The corners of the *atman* are cut off with a half *vyayama*—48 *angulis*. (112) (51)

उक्तार्थम् ।

सनतं पुच्छम् ॥ (११३) (५२)

The tail is narrowed (113) (52)

There had been drawn at the place of the tail, an oblong of eight *aratnis*—192 *angulis* length (from the north towards the south) by three *aratnis*—72 *angulis* breadth. The two east corners being cut off with three aratnis. the area of the tail is reduced so far as to contain the fifteen *pañcamıs* mentioned in the Sutra 109

पुच्छपूर्वान्तस्य ह्यरत्निरत्वात्पूर्वस्मात्संनतं संकुचितम् । विस्पष्टार्थं सिद्धस्य पुनर्वचनम् ।

पक्षयोस्त्रिभिस्त्रिभिररत्निभिरपनामः ।। (११४) (५३)

On both wings rhe bending is done with three *aratnis*=72 *angulis* (114) (53)

*i.e*. at the distance of 72 angulis towards the east from the centre of the west side of the wing a mark is made, the triangle cut out, etc., in the same way as it is done in the first kind of the *vakrapakṣa śyena.*

निरणाम इत्यर्थः । पूर्वश्येने त्रिभिः प्रक्रमैर्दृष्टमिहारत्निभिरित्यर्थः ।

अध्यर्धाभिः षट् षट् पत्राणि कुर्यात् ।। (११५) (५४)

With halfs of the adhyardha-bricks six feathers are to be made at the end of each wing. (115) (54)

The adhyardha-bricks will be described in Sutra 118 ; their halves are obtained by drawing a diagonal. By adding the *patras* the area of each wing is made equal to that of fifty-eight and a half *pañcamis.*

व्याख्यातप्रायमेतत् ।

आकृतिः शिरसो नित्या ।। (११६) (५५)

The form of the head is the same. (116) (55)

*i.e.*, as in the first kind of the *vakrapakṣa śyena* the two east corners of the head are cut off, only this time with an *aratni* instead of a *prakrama.*

तस्यांसौ प्रक्रमेणेत्यनेन प्रकारेणोक्तेत्यर्थः इहारत्निनेति विशेषः ।

अथेष्टकानां विकाराः ।। (११७) (५६)

Now follows the description of the changes (in the size and shape) of the bricks (117) (56)

अथशब्दः संबन्धार्थः । एतस्येत्यर्थः ।

पुरुषस्य पञ्चम्यस्ता एवैकतोऽध्यर्धा ॥ (११८) (५७)

Bricks the side of which is equal to the fifth part of a *puruṣa*=24 *angulis* and bricks which are longer on one side by a half (i e oblong bricks of 24 *angulis* by 36 *angulis* ) (118) (57)

ता एव पञ्चम्य । एक पार्श्वेनोऽध्यर्धा । अरत्निव्यासा । त्रिप्रादेशदीर्घा इत्यर्थ ।

ता एवैकत सपादा ॥ (११९) (५८)

*Pancamis* which are longer on one side by a quarter (i e. oblongs of 30 *angulis* by 24 *angulis*) (119) (58)

अरत्निव्यासास्त्रिंशदङ्गुलायामा । एव त्रीणि प्रधानानि करणानि ।

पञ्चमभागीयाया सार्ध्या पाद्या ॥ (१२०) (५९)

Bricks equal to the fourth part of a *pañcami* together with bricks equal to the half of a *pañcami* (120) (69)

As usual they are formed by the diagonals of the *pañcami* नित्यमक्ष्णयापच्छेदनमनादेश इत्युक्तत्वात् । पञ्चमीमक्ष्णया भिन्द्यात् । तस्या द्वे पार्श्वे चतुर्विंशत्यङ्गुले ।

तृतीय तिलद्वयोन चतुस्त्रिंशदङ्गुलम् । पाद्यायास्तिलद्वयोनसप्तदशाङ्गुले द्वेफलके । चतुर्विंशत्यङ्गुलमेकम् ।

तथाध्यर्धाया ॥ (१२१) (६०)

In the same way (bricks are made which are equal to the half and the fourth part) of an *adhyardhā* brick (121) (60)

As the *adhyardha* brick is not a square but an oblong it is divided by its two diagonals into four triangles of which two and two are equal to each other The technical names of these two different kinds of triangular bricks are *dirghapādya* and *sūlapādya*

अध्यर्धाया अपि पाद्या सार्ध्या । तत्राध्यर्धाया अरत्निप्रमाणमेकम् । त्रिप्रादेशमपरम् । नवतिलसहितत्रिचत्वारिंशदङ्गुल तृतीय पार्श्वम् । अध्यर्धाया पाद्यासु विशेष । अध्यर्धा भूमौ लिखित्वाक्ष्णयाभयतो भिन्द्यात् । एव कृते तिर्यङ्मानीप्रदेशस्था पाद्या शूलपाद्येति सज्ञिता । तस्या द्वे पार्श्वे सैकविंशतितिले एकविंशत्यङ्गुले । इतरदरत्निप्रमाणम् । पार्श्वमानी प्रदे-

शस्या पाद्या दीर्घपाद्येति संज्ञिता। तस्या अपि द्वे फलके सैकविंशतितिले एकविंशत्यङ्गुले। त्रिप्रादेशमितरत्।

तयोश्चाष्टमभागौ तथा श्लेषयेद्यथा तिस्रः स्रक्तयो भवन्ति ॥ (१२२) (६१)

Then the eighth parts of a *pañcamī* and of an *adhyardhā* have to be combined in that manner that three corners (i e, a triangle) are the result. (122) (61)

For this purpose the pādyā of a *pancamī* is divided by a line drawn from the apex to the middle of the base, the result is a rectangular triangle, the sides of which are 12 *aṅgulis*, 12 *aṅgulis*, 16 aṅgulis 33 *tilas* This is the eighth part of the *pañcamī*

In the same way the dirghyapādyā of an *adhyardhā* brick is divided the result is the nominally eighth part of the adhyardha, a rectangular triangle the sides of which=12 *aṅgulis*, 18 *aṅgulis* and 21 *aṅgulis* 21 *tilas* By putting together the equal sides of these two triangles, we get a scalene triangle the sides of which=16 *aṅgulis* 33 *tilas*, 21 *aṅgulis* 21 *tilas*, 30 *aṅgulis* The name of a brick of this kind is *ubhayī*

तयो पञ्चमभागीयाध्यर्धयोरष्टमभागौ पादेष्टकयोरर्ध्ये तथा श्लेषयेद्यथा श्लिष्टे तिस्र स्रक्तयो भवन्ति। तत्र त्रीणि फलकानि। त्रिंशदङ्गुलमेकम्। तिलोनसप्तदशाङ्गुलमपरम् सैकविंशतितिलमेकविंशत्यङ्गुल तृतीयम्।

अस्या उभयीति सञ्ज्ञा। उभयावयवनिर्मितत्वात्।

पञ्चमभागीयायाश्चाष्टम्य ॥ (१२३) (६२)

And bricks which are equal to the eighth part of a *pancamī*. The way of forming these bricks has been described under the preceding *Sutra* (123) (62)

अष्टमीनां द्वादशाङ्गुले द्वे प्रमाणे। तिलोनसप्तदशाङ्गुलमेकं प्रमाणम्।

तानि दश ॥ (१२४) (६३)

These are altogether ten different classes of bricks (124)(63)

The commentator observes that this seemingly unnecessary sūtra has the purpose of intimating that there are two different kinds of *pādyās* of the *adhyardha* bricks

अध्यार्धपाद्यानां प्रकारद्वयसूचनमिद सत्यावचनम् । तत्र पञ्चम्यश्चतुरशीतिशतम् । तदर्ध्या अष्टशतम् । तत्पाद्या द्वाविंशति । चतस्रोऽष्टम्य । अष्टाचत्वारिंशत्सपादा । षोडशोभय्य । चतु पञ्चाशच्छतद्वयमध्यर्धा । तदर्ध्या षण्णवतिशतद्वयम् । षटपञ्चाशद् दीर्घपाद्या द्वादश शूलपाद्या । चोडानाकसदश्चतस्र पञ्चम्य द्वे तदर्ध्ये चतस्रोऽध्यर्धा । एव पञ्चसहस्रमिष्टका । अथोपधानम् ।

आत्मनि पञ्चमभागीया सार्ध्या उपदध्यात् ॥ (१२५)(६४)

In the *ātman* are to be placed *pañcamis* and half bricks (125) (64)

*Ardhyās* at those places where something had been cut off *pañcamis* in the rest

पञ्चमभागीयास्तदर्ध्याश्चोपदध्यात् । न पाद्या नाप्यध्यर्धा इत्यर्थ ।

तथा पुच्छे ॥ (१२६) (६५)

The same is to be done in the tail i e it is to be covered with *pañcamis* and their *ardhyās* (126) (65)

पञ्चमभागीया सार्ध्या इत्येव ।

पक्षयोश्चाध्यर्धा सार्ध्या ॥ (१२७) (६६)

In both wings *adhyardhā* bricks and their *ardhyas* are to be placed (127) (66)

पूर्वेण व्याख्यातम् ।

शिरसि या सभवन्ति ॥ (१२८) (६७)

In the head those bricks are to be placed which fit into it (two *ardhyās* and two *sapādās*) (128) (67)

द्वे अर्ध्ये द्वे सपादे इत्यर्थ । एव सामान्येनोपधानमुक्तम् । अत्रैवमुपधानम् । पुच्छात्मशिरसामुदीच्य पञ्चदश रीतय । तत्र पुच्छाग्र मध्यत षट् पञ्चम्य पार्श्वयोर्द्वे तदर्ध्ये । पूर्वस्या मध्यतश्चतस्र पञ्चम्य पार्श्वयोर्द्वे

तदर्ध्ये। तृतीयस्या पडध्यर्धा । एव चतुर्थी रीति । पञ्चमी पार्श्वयोरर्ध्ये मध्यनश्चतस्र पञ्चम्य । तत पडभि षड्भि पञ्चमीभिः षड् रीतय । पञ्चमीवद् द्वादशी। चतुर्थीवत् त्रयोदशी। शिरसि चतुर्दश्या प्रागायते द्वे सपादे। पञ्चदश्या शिरसोऽग्रे द्वे अर्ध्ये बहिर्विशेषे। पक्षे पत्रवर्जा षड रीतय. प्राञ्च । तत्र पक्षमूलरीत्या मध्ये पञ्च तिरश्च्यो ऽध्यर्धा । पश्चात्पुरस्ताच्च द्व अध्यर्धार्ध्ये। तस्या दक्षिणतो ऽप्येवम्। तस्या दक्षिणतो निर्णामिसमीपरीत्या द्वादशाध्यर्धार्ध्या । निर्णामिदक्षिणरीत्यामप्येवम्। ततो दक्षिणतो द्वे रीती पक्षमूलरीतिद्वयवत् । पक्षपत्रेपु पडध्यर्धार्ध्या उदीच्य । एवमुत्तर पक्ष । आत्मनि षष्टिरिष्टका । विंशति पुच्छे। चतस्र शिरसि। पक्षयो पोडशशतम्। अस्मिन्प्रस्तारे चतु पञ्चाशत्पञ्चम्य अष्टाविंशतिरर्ध्या । द्वे सपादे। चत्वारिंशदध्यर्धा । षट्सप्ततिरध्यर्धार्ध्या ।



Fig 8 *Vakrapakṣa Śyenaciti* Second kind Prastāra I (Adhyāya II Sūtra 128)

अपरस्मिन्प्रस्तारे पूर्वयो पक्षाप्ययोरेकैकामुभयीमुपदध्यात् ॥ (१२९)
(६८)

In the second *prastara* one *ubhayı* brick (see Sūtra 122) is to be placed on the eastern end of the two lines in which the wings are joined with the *ātman* (129) (68)

पूर्वयो पक्षात्मसन्ध्योरेकैकामुभयी प्रागग्रां प्रत्यग्दीर्घपार्श्वां पक्षस्याध्यर्धाष्टममागोपामुपदध्यात् । दीर्घपार्श्वेनाष्टाङ्गुलेन पक्ष प्राप्ताग्रियं ।

एकैकामपरयोः ॥ (१३०) (६९)

Likewise one *ubhayi*-brick is to be placed on the western end of the two *apyayas* (its apex turned towards the west). (130) (69)

अपरयोः पक्षात्मसंध्योरेकैकामुभयीं प्रत्यगग्रामध्यर्धाष्टमभागेन पक्षं प्राप्तामुपदध्यात् ।

द्वे द्वे शिरसः पार्श्वयोः ॥ (१३१) (७०)

Two *ubhayi*-bricks are to be placed on each side of the head. (131) (70)

दक्षिणोत्तरपार्श्वयोर्दक्षिणोदगग्रे मन्तर्दीर्घपार्श्वे शिरसोऽपच्छेदसक्तिगताग्रे एकैकामुभयी तयोः पश्चाद् बाह्यदीर्घपार्श्वे दक्षिणोदगग्रे ताभ्यां संश्लिष्टे उपदध्यात् ।

पुच्छस्यावस्तादध्यर्धाः प्राचीर्यथावकाशम् ॥ (१३२) (७१)

On the west side of the tail, *adhyardha*-bricks are to be placed, turned towards the east, as many as there is room for. (132) (71)

There is room for five of them.

पुच्छस्य पश्चिमान्ते पार्श्वयोरुभयत्र प्रादेशत्रयमवशिष्य मध्ये पञ्चाध्यर्धाः प्रागायता उपदध्यात् ।

पार्श्वयोः पाद्याः साष्टमभागाः ॥ (१३३) (७२)

On both sides (of the five *adhyardhas*) *pādyas* and bricks equal to the eighth part of a *pañcamī* are to be placed. (133) (72)

One pādyā is placed in each of the two corners and the empty places between these *pādyas* and the *pañcamīs* filled on each side with one *pādyā* and one *aṣṭabhāga*.

उपहितानामध्यर्धानां पार्श्वयोः पञ्चमीपाद्याः पञ्चम्यष्टमभागसहिताः । तत्र पुच्छश्रोण्योः प्रागग्रे पश्चिमदीर्घपार्श्वे द्वे पादेष्टके । तयो र्दक्षिणत उत्तरतश्च प्रत्यगग्रे द्वे । एवं चतस्रः पाद्याः । उभयत्र पाद्याद्वन्द्वस्य दक्षिणत उत्तरतश्चाध्यर्धामूलसंहितामेकैकामष्टमीमुपदध्यात् । उभयत्रोपहितत्रिकस्य पुरस्तादध्यर्धासमीपे । पञ्चम्यर्धक्षेत्रं परिशिष्टं भवति ।

**पक्षयोश्चाध्यर्धा सावयवा ।। (१३४) (७३)**

In both wings *adhyardha* bricks together with their parts (i e *pādyas*) (134) (73)

अवयवशब्देन दीर्घशूलपाद्ये उच्येते । नियमार्थं वचनम् ।

**शेष यथायोग यथासख्य यथाधर्मं चोपदध्यात् ।। (१३५) (७४)**

The rest of the agni is to be covered with bricks as it fits as the prescribed number requires as the nature of the agni requires (135) (74)

The bricks employed for the rest of the agni must be of such a size and such a shape as to fit into the *agni kṣetra* their number must make the number of 200 full and they must be placed in such a way as to cover the interstices between the bricks of the first layer and not to injure the symmetrical appearance of the agni

अनुपहितक्षेत्र यथायथ युज्यते । तथायथासख्य । यथा द्विशतपूर्ति । तथा यथाधर्मं । यथाग्निधर्मं रूप पशुधर्मं भेदवर्जनाद्यविनाशयन्नुपदध्यात् । भेदपरिहारेण पशुधर्म इत्यपरिग्रहेण यत्र या इष्टका सभवन्ति तयोपदध्यादित्यर्थं । तत्रैवमुपधानम् । सधिरीत्या सह पुच्छ उदीच्यस्तिस्रो रीतय तत्र पुच्छाग्ररीत्या दक्षिणान्ते प्रत्यग्दीर्घपार्श्वा पञ्चमीपाद्या । तस्या उत्तरतो विपरीता । तयोरुत्तरतोऽष्टमी प्रागुत्तरविशेषिका । एवमुपहितस्य त्रिकस्य पुरस्ताद् बाह्यविशेषा पञ्चम्यध्यर्धा । एवमस्मिन् क्षेत्रे चतस्र इष्टका तासामुत्तरेण पञ्चाध्यर्धा प्रागायता । ततो दक्षिणक्षेत्रवदुत्तरश्रोणिक्षेत्रोपधानम् । एव त्रयोदशेष्टका रीति । द्वितीयस्यां मध्ये तिस्र पञ्चम्य । पार्श्वयोस्तदर्ध्ये । सधिरीत्या मध्ये पञ्चम्येका । अभितस्तदर्ध्ये बाह्यविशेष प्रत्यगरत्निपार्श्वे । तस्यामेव रीत्यामात्मनि दक्षिणत उत्तरतश्च प्रत्यगग्र पादिकाद्वयम् ।

एव पञ्चेष्टका सधिरीति । तत पुरस्तादात्मनि पार्श्वयोरुभयत्र प्रादेशमवशिष्य शिरसो ऽप्ययरीत्या सहाष्टावुदीच्य । तत्र पुच्छाप्ययरीत्या पुरस्तान्मध्ये तिस्र पञ्चम्य ।

पार्श्वयोस्तदर्ध्ये । तत पूर्वस्या पञ्च सपादा प्रागायता । ततो ऽध्यर्धपञ्चवेन प्रागायतैका रीति । तत स्वयमातृण्णावकाशे प्राक्प्रत्यगग्रे शूलपादे । दक्षिणत उत्तरतश्चोदग्दक्षिणाग्रे । दीर्घपाद्ये । एवमुपहित-

स्य चतुष्टयस्याभितो द्वे द्वे अध्यर्धार्ध्ये तयोरभितो द्वे अध्यर्धे। एव दशेष्टका रीति । तस्या पुरस्तात्तिस्रो रीतय पश्चिमभागवत्। शिरोऽप्ययरीत्या मध्ये पञ्चमी। अभितस्तदर्ध्ये बाह्यविशेषे प्रत्यगरत्निपार्श्वे। तत पुरस्तादप्ययस्य पञ्चम्या समता प्रागायतैका सपादा । तस्या अभित सपादापार्श्वसहितामन्तस्त्रिशदङ्गुलपार्श्वां पूर्वभागस्थपञ्चम्यष्टमाशामेकैकामुभयीमुपदध्यात्। तयो पश्चाद्विपरीतामेकैकामुभयीम्। शिरसोऽग्रे पञ्चमीपाद्यैका । दक्षिणपक्षसधिरीत्यामादिन प्रत्यगग्रा उभयी सा च पञ्चम्यष्टमाशेनात्मान प्राप्ता । तस्या पश्चादात्माश एका पञ्चमीपाद्या। तयो पुरस्तात्पञ्च सपादा उदगायता आत्मान प्रादेशेन प्राप्ता । तासा पुरस्तादात्मभागस्थपञ्चम्यष्टमाशाप्रागग्रैकोभयी । तस्या पुरस्तादात्मभाग एका पञ्चमीपाद्या दक्षिणाग्रा । दक्षिणाश एका शूलपाद्योदगग्रा । एव दशेष्टका रीति । तस्या दक्षिणत प्राच्यौ द्वे रीती। तयोर्मध्ये पञ्च पञ्च तिरश्च्यो ऽध्यर्धा । पार्श्वयोश्चतस्रस्तदर्धा । निर्णा-



Fig 9 *Vakrapaksa Śyenacit* Second kind Prastara II
(Adhyāya IV Sūtra 135)

मरीत्यग्रे प्रागग्रा प्रत्यक्पद्त्रिशदङ्गुला दीर्घपाद्या । तस्या पश्चात्पञ्चाध्यर्धा उदगायता । तासा पश्चादध्यर्धामगतपद्त्रिशत्पार्श्वा बाह्यपश्चि-

मोत्तरदीर्घकर्णामु[1]दक्स्थारत्निपार्श्वामेकामध्यर्धार्ध्यामुपदध्यात् । निर्णामादौ दक्षिणत उदगग्रा शूलपाद्या । एवमष्टेष्टका रीति । तस्या दक्षिणत उत्तरपार्श्ववद्रीतिद्वयम् । पुनरीत्या पश्चिमपनाग्रे प्रत्यग्दीर्घपार्श्वा दीर्घपाद्या । तस्या उत्तरत प्राग्दीर्घपार्श्वा प्रत्यगग्रैका । तस्या पुरस्तात्प्रत्यक्पट्त्रिंशदङ्गुलोदक्स्थारत्निका प्रागुदग्दीर्घकर्णैकाध्यर्धार्ध्या । एव पञ्च पक्षेषु । एवमुत्तर पक्ष । शिरसि नवेष्टका । द्विपष्टिरात्मनि । एकविंशति पुच्छे । पक्षयोरष्टशतम् । अस्मिन्प्रस्तार एकादश पञ्चम्य । द्वादश तदर्ध्या । एकादश तत्पाद्या । द्वे अष्टम्यौ । एकविंशति सपादा । उभय्योऽष्टौ । सप्तपष्टिरध्यर्धा । चतुस्त्रिंशदर्ध्या । अष्टाविंशतिदीर्घपाद्या । षट शूलपाद्या ।

कङ्कचित एतेनात्मा पुच्छ च व्याख्यातम् ॥ (१३६) (७५)

Thereby is the *atman* and the tail of the *Kankacit* (the agni constructed in the form of a kite) explained (136) (75)

The area of the two mentioned parts of the *Kanka* is equal to the area of the corresponding parts of the second kind of the *vakrapaksa syena*

कङ्को नाम वयो विशेष । कङ्क इव चित् कङ्कचित् । तस्यानन्तरोक्तेन श्येनेनात्मा पुच्छ च व्याख्यातम् । पञ्चमीना पञ्चाशद् द्वे चात्मनि । पञ्चदश पुच्छ इत्यर्थं । क्षेत्रकरणमपि तथैव । आत्मा षडरत्निव्यासो दशारत्न्यायाम । अर्धव्यायामेन स्रक्तीनामपच्छेद । पुच्छस्त्र्यरत्नि व्यासोऽष्टारत्न्यायाम उदगायत । तस्यास्रौ त्रिभिस्त्रिभिररत्निभिरपच्छिद्यात् ।

शिरसि पञ्चोपदध्यात् ॥ (१३७) (७६)

Five *pañcamis* are to be placed in the head (137) (76)

सामर्थ्याद् द्व्यरत्निव्यासमरत्निदीर्घं शिरो भवति ।

---

1 There seems something wrong in the text the hypotenuse of the *adhyardhardhya* runs from the west towards the south not towards the north and we expect therefore •पश्चिम दक्षिण दीर्घ• It is true that the brick might be placed in such a way as to suit the words of the text but then the *sulapadya* which is mentioned next would have to be placed to the north not to the south of the *adhyardhardhya* and we should have to read निर्णामादावुत्तरत ।

तस्याकृतिर्व्याख्याता ॥ (१३८) (७७)

Its shape has been explained (138) (77)

From an oblong of three *aratnis* length by two *aratnis* breadth the two east corners are cut off with one *aratni* The remaining area is equal to five *pañcamis*

तस्यासौ प्रक्रमेणेत्युक्तप्रकारेणारत्निनापच्छेद इत्यर्थः । एवम-पच्छिन्ने पञ्च पञ्चम्यो भवन्ति ।

सप्तपञ्चाशद्दक्षिणे पक्ष उपदध्यात् ॥ (१३९) (७८)

Fifty-seven *pañcamis* are to be placed in the southern wing (139) (78)

द्वितीयार्थे प्रथमा । षडरत्निव्याम नवारत्न्युदगायतं दीर्घचतुरस्रं कृत्वा व्यायामेन सप्रादेशेन पक्षयोरपनाम इति वक्ष्यमाणत्वान्नव प्रादेशेन पक्षनमनं कृत्वा पक्षान्ते पञ्चम्यर्धाभि षट् षट् पत्राणि कुर्यात् । एवं सप्त पञ्चाशत् सप्तम्यो भवन्ति ।

तथोत्तरे ॥ (१४०) (७९)

The same is to be done in the northern wing (140) (79)

सप्तपञ्चाशदुपदध्यादित्येव ।

व्यायामेन सप्रादेशेन पक्षयोरपनामः ॥ (१४१) (८०)

The bending of the wings is to be done with a *vyāyāma* together with a *prādeśa* (=108 *angulis*) (141) (80)

The proceeding is analogous to that in the *vakrapakṣa śyena*

उक्तार्थं ।

पञ्चमभागीयार्ध्याभि. षट् षट् पत्राणि कुर्यात् ॥ (१४२) (८१)

With bricks which are equal to half a *pañcami* six feathers are to be made at each wing (141) (81)

व्याख्यानप्रायम् । एवमात्मपुच्छशिर पक्षेषु षडशीतिशत पञ्चम्यो भवन्ति ।

अध्यर्धाविशिष्यते ।। (१४३) (८२)

One *adhyardha* brick remains (143) (82)

Atman wings head and tail as described in the preceding Sutras require one hundred and eighty six *pañcamıs* as the whole agni contains one hundred and eighty-seven and a half one and a half remain These are used for the two feet of the *kanka*

अध्यर्धा पञ्चम्या परिशिष्यते ।

तया पुच्छस्यावस्तात्पादावरत्निमात्रावरत्न्यन्तरालौ प्रादेशव्यासौ भवत ।। (१४४) (८३)

With this *adhyardha* two feet are made at the western end of the tail of the measure (length) of one *aratnı*=24 *angulıs* distant from each other one aratnı and having the breadth of one *prādeśa*=12 *angulıs* (144) (83)

तयाध्यधया पुच्छस्यावस्तात् । तन्वोपप्लवमध्यैरित्युक्तेऽपि । अन्तरालविधानेनात्मन्यसभवात् । पुच्छाग्रे दक्षिणत उत्तरतश्च ऽयरत्निमात्रमवशिष्यानन्तरमरत्निदीर्घौ प्रादेशव्यासौ प्रत्यञ्चौ पादौ भवत । एव पञ्चमी विनियुक्ता भवति । अर्धादरत्न्यन्तरालौ च भवत ।

तयोरवस्तादभितो द्वौ द्वावष्टमभागौ प्राग्भेदावुपदध्यात् ।। (१४५) (८४)

At the western end of these (bricks mentioned in the preceding sutra) on each side a brick the area of which is equal to the eighth part of a *pañcamı* has to be placed their differences (hypotenuses) turned towards the east (Four triangular bricks with their hypotenuses running towards the north-east and the south east respectively) (145) (84)

तयो प्रादेशव्यासारत्निदीर्घयो पदयो पुरस्तात् प्रादेशप्रमाणमवशिष्य पश्चिमप्रादेशभागस्याभितो दक्षिणत उत्तरतश्च प्रत्येक द्वौ द्वावष्टमभागौ प्राग्भेदावुभयत्र दक्षिणत प्रागुत्तरविभेदौ उत्तरत प्राग्दक्षिणविभेदौ । एव चतुर्भिरष्टमभागै पञ्चम्यर्धा विनियुक्ता भवति । एवमध्यर्धा सा कृत्स्नेन पादयोर्विनियुक्ता भवति ।

एव ऽ सारत्निप्रादेश सप्तविध सपद्यते ।। (१४६) (८५)

In this manner the seven fold agni together with the two *aratnıs* and the *prādeśa* is brought about (146) (85)

एवमात्म प्रभृतिषु शतमशीति सप्तार्धा च पञ्चम्यो द्रष्टव्याः ।

अथेष्टकानां विकाराः पञ्चमभागीयाः सावयवाः ॥ (१४७) (८६)

Now the different kinds of bricks will be described *Pañcamis* and their parts (*ardhyas, pādyas* and *aṣṭamis*) (147) (86)

पञ्चमभागीयास्तदर्ध्यास्तत्पाद्यास्तदष्टम्य इत्यर्थः । नित्यमक्ष्णया-पच्छेदनमित्यस्य सार्वत्रिकत्वाद् वचनादृते सर्वत्राक्ष्णयापच्छेदनम् ।

प देष्टकां चतुर्भिः परिगृह्णीयात् ॥ (१४८) (८७)

A brick equal to the fourth part of a *pañcami* is to be enclosed by four sides (148) (88)

पञ्चम्याश्चतुर्भागीयक्षेत्र चतुर्भिः फलकैं कुर्यात् ।

अर्धप्रादेशेनाध्यर्धप्रादेशेन प्रादेशेन प्रादेशसविशेषेणेति । (१४६) (८८)

With half a *prādeśa*=6 *aṅgulis* one *prādeśa* and a half=18 *aṅgulis*, a *aṅgulis*=12 *prādeśa* and the *saviśea* of a *prādeśa*=16 *aṅgulis* 33 *tilas*,—The area of this brick=144 square *aṅgulis*=the fourth part of the area of a *pañcami* (149) (88)

चतुरस्रपाद्यासूत्रेण व्याख्यातम् । अत्र दक्षिणत उत्तरत पश्चात्पुर-स्ताच्चेति क्रम ।

अध्यर्धेष्टकां चतुर्भिः परिगृह्णीयादर्धव्यायामेन द्वाभ्यामरत्निभ्याम-रत्निसविशेषेणेति ॥ (१५०) (८६)

An *adhyerdha*-brick is to be enclosed with four sides, half a *vyāyāma*=48 *aṅgulis*, two sides of one aratni length and the *saviśesa* of an *aratni* (about 33 *aṅgulis* 32 *tilas*) (150) (89)

अर्धव्यायामेन द्वयरत्निनोत्तर फलकम् । द्वाभ्यामरत्निभ्या प्रत्यग्दक्षि-णफलके । अरत्निप्रमाणे इत्यर्थः । अरत्निसविशेषेण पूर्वफलकम् । एव सन्निवेशेऽध्यर्धिका पञ्चमी भवति ।

ताः षट् ॥ (१५१) (९०)

These are six kinds of bricks. (151) (90)

एव षट्प्रकारा इष्टका इत्यर्थक । विस्पष्टार्थं वचनम् । तत्र नवत्यधिक शतत्रय पञ्चम्य । अशीतिशतमर्ध्या । अष्टशत पाद्या: । विंशतिरष्टम्य । विंशतिश्चतुरस्रपाद्या । द्व्यशीत्यधिकं शतद्वयमध्यर्धा । चोडानाकसद' षडर्ध्या पञ्चम्यश्चतस्र । अथोपधानम् ।

**तासां चतुरस्रपाद्या· साष्टमभागाः पादयोरुपधाय शेषं यथायोगं यथासख्यं यथाधर्मं चोपदध्यात् ॥ (१५२) (९१)**

Having placed from among these bricks the four-cornered quarter bricks together with the *astamis* in the two feet, the rest of the agni is to be covered with bricks as it fits, as the prescribed number requires, as the nature of the agni requires (152) 91)

तासा षट्प्रकाराणा मध्ये पादयो प्रादेशत्र्यंशारत्निदीर्घप्रदेशे द्वे द्वे चतुरस्रपाद्ये अन्तर्विशेषे उपधायैकैकस्य द्वौ द्वावष्टभागावभित पश्चिमार्धे प्राग्भेदावुपधाय शेषाश्चतु प्रकारा । यथायोगमित्यादि व्याख्यातम् । प्रस्तारद्वयस्य प्रपञ्चेनानुक्ति । तत्रैवमुपधानम् । शिरोऽग्रे बहिर्मे अर्ध्ये तत शिरस्यरत्निचतुष्टयम् । आत्मापच्छेदेषु चतुर्षु वहिर्विशेषा अष्टावर्धेष्टका । आत्मशेषेऽष्टचत्वारिंशदरत्न्य । पुच्छपार्श्वयो षडर्ध्या । मध्ये रीति त्रयेण द्वादश पञ्चम्य । एवमात्मशिर पुच्छेषु पादाभ्या सहाष्टाशीतिरिष्टका । निर्णामाग्र एकैका पाद्या । तत पश्चात्पञ्चमी । तत पश्चाद् द्वे अध्यर्धे प्राक्प्रत्यगग्रिके । तयो पश्चात्प्रत्यगग्रिकाध्यर्धा । निर्णामादौ दक्षिणत उत्तरतो वावशिष्टक्षेत्रे पादेष्टका । एव षडिष्टकारीति । निर्णामरीतिमभितश्चतस्रोऽध्यर्धा रीतय चतुरिष्टका प्राच्य । तासामभितश्चतस्रोऽरत्निरीतय । तासु मध्ये पञ्च पञ्च पञ्चम्य पार्श्वेष्वष्टार्ध्या । एव सप्तेष्टका रीतया । पक्षाङ्गुला षडर्ध्या स्यु । आत्मनि षट् पञ्चाशत् । पुच्छे ऽष्टादश । पादयोरष्टौ । षट् शिरसि । पक्षयोर्द्वादशशतम् । अस्मिन्प्रस्तारे षडधिक शत पञ्चम्य । चतुश्चत्वारिंशदर्ध्या । चतस्र पाद्या । अष्टत्रिंशदध्यर्धा ।

अथापर प्रस्तार । शिरोऽग्रे प्रागग्रा पाद्या । तस्या पश्चात्प्राक्प्रत्यगग्रिके अक्ष्णयासगते द्वे अध्यर्धे । तयो पश्चिमात्मानमर्धारत्निना व्याप्ता । तयोरध्यर्धयोरभित शिरसि चतस्रश्चतस्र पाद्या । तासा पश्चात्प्रागरत्निपार्श्वे प्रागुदक्प्राग्दक्षिणामविशेषे आत्मशिर सधौ द्वे अर्ध्ये । एव शिरसि त्रयोदशेष्टका । तासा पश्चादध्यर्धाद्वय दक्षिणोत्तरमक्ष्णया सगतम् । पार्श्वयोरर्ध्ये । तत पश्चात्पक्षाप्ययोरुभयत्र प्रादेश-



Fig 10 *Kankcit* Prastara I.
(Adhyaya IV, Sūtra 152)



Fig. 11. *Kankcit*, Prastara II,
(Adhyāya IV, Sūtra 152)

मवशिष्य पञ्चमीरीतय पञ्चेष्टका सप्तोदीच्य । तासा पश्चादध्यर्धाद्वयम् । पार्श्वयोरर्ध्ये । तत पश्चात्पुच्छात्मसधौ मध्य पञ्चमो तामभितो द्व अर्ध्ये आत्मगतारत्निपार्श्वे दक्षिणोत्तरसविशेषे । तयो पश्चिमपार्श्वे पुच्छक्षेत्रे प्रागग्रे द्वे पाद्ये । एव पञ्चेष्टका संधिरीति । तत पश्चादध्यर्धाद्वय दक्षिणोत्तरम् । पार्श्वयोरर्ध्ये । ततश्चतस्रोऽध्यर्धास्तिरश्च्य । तत पुच्छाग्रीत्या पार्श्वयो पाद्या पञ्च पञ्च । ततो द्वे अर्ध्ये पदमध्यगताग्रिके प्राक्स्थारत्निपार्श्वे दक्षिणोत्तरपार्श्वस्थसविशेषे । तयोर्मध्ये प्रागग्रा पाद्या । तामभित प्रत्यगग्रिके द्वे अष्टम्यौ । पादान्तयोर्द्वे द्वे चतुरस्रपाद्ये दक्षिणोत्तरायते प्रत्यक्स्थदीर्घपार्श्वे । तत पूर्वप्रविष्टाध्यर्धाग्रसहितामेकैमकामष्टीमी पादमध्ययोरुपदध्यात् । एव समस्ता एकविंशतिरिष्टका । पक्षात्मसधिरीत्योश्चतस्रश्चतस्रो ऽध्यर्धा प्रागायता । तासा पौरस्त्यपाश्चात्या प्राक् प्रत्यगग्रिका । तत्र पूर्वपक्षात्मसध्योर्दक्षिणोत्तरभागे द्वे पाद्ये उदग्दक्षिणाग्रे । एव पञ्चेष्टके एते रीत्यौ । पक्षयो पत्रसधिरीत्योर्मध्ये चतुरिष्टका अध्यर्धा रीतय । प्रत्येकमष्टौ । पक्षपत्रेषु पादेष्टके अर्धेष्टकामिति पूर्ववदुपधानम् । एव निरति त्रयोदशेष्टका । आत्मनि पक्षपुच्छसधिरीतिभि सह षट् पञ्चाशत् । पुच्छ एकत्रिंशत् । पक्षयो शतम् । अस्मिन्प्रस्तारे षट्त्रिंशत्पञ्चम्य । चतुर्विंशतिरर्ध्या । अष्टचत्वारिंशत्पाद्या । चतस्रोऽष्टम्य । चतस्रश्चतुरस्रपाद्या । चतुरशीतिरध्यर्धा । अत्र कल्पोक्तो विधिरनुसधेय । तत्रैवमुक्तम् । वङ्कुचित चिन्वीत य कामयेत शीर्षण्वानमुष्मिल्लोके स्यामिति । एतस्यैव सतो ऽरत्निमात्रेण प्राक् शिर इव निरूहति । स तथा विमितो भवति यथा न बहिर्वेदियूप स्यादिति । तत्रारत्निमात्रेण प्राक् शिर इव निरूहतीति । अस्य व्याख्याताभिप्रायेणोक्त शिरसि पञ्चोपदध्यादिति ।

अलजचित एतेनात्मा शिरः पुच्छ च व्याख्यात पादावपोद्धृत्य ॥ (१५३) (९२)

Thereby the *atman* the head and the tail of the altar constructed in the shape of an *alaja* (a certain bird distinguished as will appear from the following by a peculiar conformation of the wings) are explained while the feet are removed (153) (92)

पादौ वर्जयित्वानन्तरोक्तेन वङ्कुचितालजचित आत्मा शिर पुच्छ च व्याख्यानम् । अस्य पादौ न भवत इत्युक्त भवति । अलजोऽपि वयोविशेष । पञ्चमीनां पञ्चानद् द्वे चात्मनि । पञ्चादश पुच्छे । शिरसि पञ्चोपदध्यादित्यर्थ । अत्रकरणमपि पूर्ववत् । पक्षयोर्विशेषमाह ।

त्रिषष्टिर्दक्षिणे पक्ष उपदध्यात् ॥ (१५४) (९३)

Sixty-three (*pañcamı*) are to be placed in the southern wing (154) (93)

An oblong of ten *aratnıs*=240 *angulıs* length by six *artanis*=144 *arātnıs* breadth is drawn, it contains 60 *pañcamıs* to which are to be added three *pañcamıs* constituting the six *parras*

द्वितीयार्थे प्रथमा। सामर्थ्यात् षडरत्निव्यास दशारत्निदीर्घमुद-गायत दीर्घचतुरस्र कृत्वा पुरुषेण पक्षयोरपनाम इति वक्ष्यमाणत्वात् पुरुषेण नमन कृत्वा पक्षाग्रेऽरत्न्यर्ध्याभि षट् पत्राणि कुर्यात्। एव त्रिषष्टि पञ्चम्यो भवन्ति।

तथोत्तरे ॥ (१५५) (९४)

The same is done in the northern wing (155) (94)

त्रिषष्टि पक्ष उपदध्यादित्येव।

पुरुषेण पक्षयोरपनाम ॥ (१५६) (९५)

The bending of the wings is to be done with a *purusa*=120 *angulıs* (156) (95)

It is managed in the same way as the bending of the wings of the *syena* and the *kanka*

व्याख्यातप्रायम्। आत्म शिर पुच्छेषु द्वासप्तति पञ्चम्य। पक्षयो षड्विंशति शत पञ्चम्य। तत्र पक्षयोरधोधिरा दश दश पञ्चम्यो ऽति-रिच्यन्ते। तासां निरसनप्रकारमाह।

अपरस्मादपनामात्प्राञ्चमरत्नि मित्वा तस्मिन्स्पद्यां नियम्यापर पक्ष-पत्रापच्छेदमन्यापच्छेदेत् ॥ (१५७) (९६)

Having measured from the western end of the bending of the wings one *aratnı* towards the east and having fastened (at a pole fixed on the end of that *aratnı*) a cord this cord is to be stretched in the direction of the western cutting off of the feathers of the wings (157) (96)

The cord is stretched from the mentioned pole along the hypotenuse of the triangle which forms the western *sutra* of the wing

उभयत्रापरस्मान्निर्णामि मूलादारभ्य प्राञ्चमरत्निं मित्वा तत्र शङ्कुं निहत्य तस्मिन्स्पन्द्यां प्रतिमुच्यापरपक्षपत्रापच्छेदमुभयत्र पश्चिमपत्रस्य कर्णरूप पार्श्वमानीमालक्षीकृत्य निपातयेत् ।

एवं पञ्च पञ्चम्य. सार्ध्या उद्धृता भवन्ति ॥ (१५८) (९७)

In this manner (*i e*, by cutting off the stripe situated between the cord and the western edge of the wing) five and a half *pañcamis* are deducted (from the area of the wing). (158) (97)

निर्णामिबहिर्भूतपक्षांशे षड्भि पत्रै. सह त्रयस्त्रिंशत्पञ्चम्यः । उक्तेन प्रकारेण पक्षांशे निरस्त एकैकस्मिन्पक्षे पञ्च सार्ध्याः पञ्चम्यो निरस्ता भवन्ति । एमेकादश निरस्ता भवन्ति । सार्धा दश पञ्चम्यो निरस्ताः । तत्र पञ्चम्यर्ध्याया. प्रक्षेपप्रकारमाह ।

पादेष्टकामपनाम उपधाय ॥ (१५९) (९८)

Having placed a quarter-brick on (the western end of) each bending—(159) (98)

By cutting off the sixth part of the outer half of each wing, eleven *pañcamis* had been taken away from the area of the agni. The number of *pañcamis* would then amount to 187 only instead of 187½ (72 in the ātman, head and tail together, 67¾ in each wing) The wanting half is supplied by the two quarter-bricks mentioned in the sutra

उपदध्यादिति वक्ष्यमाणेन सम्बन्ध· । पादेष्टकां निर्णामिमूले उद्धृतदेशे कुटिलस्थाने दक्षिणपक्षे दक्षिणाग्रामुत्तरपक्ष उदगग्राम् । एवमर्घेष्टका प्रक्षिप्ता भवति । अत: सार्ध्या दश गता भवन्ति । अथोपधानम् ।

तासां चतुरस्रपाद्याः साष्टमभागा अपोद्धृत्य शेषा यथायोगं यथासङ्ख्य यथाधर्मं चोपदध्यात् ॥ (१६०) (९९)

—and having put aside out of among these (classes of bricks), the four-cornered quarter-bricks and those which are equal to the eighth part of a *pañcami*, the remaining classes of bricks are to be placed as it fits, etc. (160) (99)

तासां षण्णामिष्टकाना वङ्कचित्युक्तानां मध्ये चतुरस्रपाद्याः साष्टमभागा वर्जयित्वा तासां कङ्कचिति पादोपधानार्थत्वादिह पादयोरभावात्ता-

इष्टकाना स्यानभेदो न रथचक्रचिद्वत् । तस्मिन्यावदसभवेदित्यादि कर्त्तव्यमित्यर्थ. । देशभेद स्वयमेवाह ।

तत् सर्वाभि प्रदक्षिण परिचिनुयात् ॥ (२५२) (१६)

The area of the *paricayya* is to be covered by placing all bricks in circles towards the right hand side (252) [16]

The bricks are to be placed in concentric circles (see the commentary)

तमग्नि सर्वाभिरिष्टकाभि प्रदक्षिण सर्वतश्चिनुयात् । छन्दश्चिदध्यायेऽप्युक्तम् । परिचाय्यचित चिन्वीत ग्रामकाम इति । अनुशर्करमन्त शर्करामिष्टका परिचिनोति । अथान्तरनोऽथान्तरत एवमेव करोति । स एष परिचाय्यो ग्रामकामस्य परिगृह्यत इति । तत्रानुशर्करमिति सावित्राग्निवत् परिमण्डलाकारमग्निक्षेत्र विहृत्योपदध्यादित्यर्थ । परिकृप्यत इति । द्वादशसीता परिमण्डला वपणीया इत्यर्थ । अयमत्र प्रकार । अग्निक्षेत्रे समान्तरालानि षण्मण्डलानि कृत्वा नाभिमष्टधा विभजेत् । नाभिमण्डलादारम्य द्वितीयतृतीयमण्डले प्रत्येक षोडशधा विभजेत् । चतुर्थं द्वात्रिंशधा विभजेत् । पञ्चमषष्ठमण्डले प्रत्येक चतुःषष्टिमिष्टका कुर्यात् । एव द्विशतपूर्ति । प्रतिमण्डल करणभेद । एव षट् करणानि । अपरस्मिन्प्रस्तारे पूर्वोक्तमण्डलमध्येषु मध्यवर्जितेषु परिलिखेत् । एवमत्रापि षण्मण्डलानि सपद्यन्ते । पूर्वप्रस्तारवदेव यथा भेदो न भवति तथा विभाग । मध्यममष्टधा पूर्वलेखान्तरालेषु विभजेत् । द्वितीयतृतीयमण्डले षोडशके । द्वात्रिंशक चतुर्थम् । पञ्चमषष्ठे चतुःषष्टि द्वयम् । सर्वत्र भेदपरिहारेण लेखनीया । एव द्विशत प्रस्तार । अत्रापि षट् करणानि । स एष द्वादशकरण परिमण्डल परिचाय्यचित् ।



# अष्टमोऽध्यायः

इमशानचितं चिन्वीतेति विज्ञायते । सर्वमग्निं चतुरस्रान्पञ्चदश भागान्कृत्वा ॥ (२५३) (१)

He is to construct the *impläna citi* after having divided the whole *agnikṣetra* into fifteen square parts (253) [1]
(See *Journ Asiatic Society of Bengal* 1875 Part I p 265)

सर्वमग्निक्षेत्रं पञ्चदशधा विभज्य समचतुरस्रान्कृत्वा । चिनु ।

तेषामाख्यातमुपधानम् ॥ (२५४) (२)

The arrangement of these fifteen squares has already been taught (In the preceeding chapters of Baudhāyana s *Kalpasutra*, see the commentary) (254) [2]

कल्पे छन्दश्चिदध्याये तेषां चतुरस्रीकृतानां पञ्चदशधा विभक्तानां भागानामुपधानविनियोगं तं क्षत्रक्रियेत्यर्थं । माख्यातमुक्तम् । नस्तत्रैवानुसन्धेयमित्यर्थं । इमशानचितं चिन्वीत य कामयेत पितृलोक ऋध्नुयामिति षट् प्राञ्च पुरुषास्तस्य पुरस्तात्तिर्यञ्चौ तौ द्वौ स आत्मेति । तत्र पुरुषशब्देन पञ्चदशधा विभक्ता भागा एवोच्यन्ते । अस्यायमर्थं । अग्निक्षेत्रं सर्वं लक्षमष्टौ सहस्राण्यङ्गुलय । ता पञ्चदशधा विभज्य लब्ध सप्तसहस्राणि द्वे शते चाङगुलय । तस्य भागस्य समचतुरस्रकरणी षट्तिलोनपञ्चाशीत्यङ्गुला । एवं पुरुष शब्दितैर्भागैं षट् प्राञ्च पुरुषा । षड्भागप्रमाणायामा इत्यर्थं । स च षट्त्रिंशतितिलोनदशाधिकपञ्चशताङ्गुलय पुरस्तात्तिर्यगित्यर्थं । द्वौ पश्चात्तिर्यञ्चौ । द्वादशतिलोन सप्ततिशताङ्गुलय । पश्चात्तिर्यगित्यर्थं । स आत्मा । ईदृग्विशिष्टरूप आत्मा । नान्यदङ्गमस्तीत्यर्थं, एवं कल्पोक्तप्रकारेण क्षेत्रकरणमुक्तम् । इदानीमिष्टकोपधानविधिरुच्यते ।

त्रिभिर्भागैर्भागार्धव्यासं दीर्घचतुरस्रं विहृत्य पूर्वस्या करण्या अर्धाक्ष्णया श्रोणी प्रत्यास्त्रियान्तावुद्धरेत् ॥ (२५५) (३)

With three of these parts (with three times the length of the side of one of the above mentioned fifteen parts) construct an oblong of the breadth of one part, draw from the middle of the east side of this oblong lines towards the two west-corners and cut off the two side-pieces (255) [3]

After the removal of these two pieces, there remains a *prauga*

त्रिभिर्भागैरायामभूतैर्भागार्धंव्यासं सार्धचतु:पञ्चाशच्छतद्वयाङ्गुलायाम स चतुर्दशतिलद्विचत्वारिंशदङ्गुलव्यासं दीर्घं चतुरस्रं विहृत्य पूर्वस्यास्तिर्यङ्मान्या मध्यादारम्य श्रोणी प्रत्यालिख्य प्रउगाकार कृत्वान्तावुद्धरेत्।

तस्य दशधा विभागः ।। (२५६) (४)

This *prauga* is divided into ten parts (*praugas* and *ubhayataḥ praugas*, any other division would require a detailed description of different parts ; see the commentary). (256) [4]

कर्तव्यइति शेप: । तस्य प्रउगस्य प्रउगाकारा उभयतः प्रउगाकारा इष्टका यथा भवन्ति तथा दशधा विभागः । अन्यथा विभागे करणबहुत्वं स्यात्। तत्रैव विभाग· । प्रउग पृष्ठ्यनीके समान्तराणि त्रीणि चिह्नानि कृत्वा चतुरो विभागान्कृत्वा प्रउगपार्श्वयोरपि तथा कृत्वा पृष्ठ्यनीकप्रथम चिह्नादारभ्य इतरपार्श्वप्रथमचिह्नं प्रत्यालिखेत् । एवं द्वितीयचिह्नादारभ्य पार्श्वद्वितीयम् । एव तृतीयचिह्नादारभ्य तथा तृतीयम्। तथा तृतीयचिह्नादारभ्य इतरपार्श्वप्रथमचिन्ह प्रत्यालिखेत्। एवमितरयो.। एव विभक्ते पृष्ठ्यनीकस्था: प्रउगाकाराश्चतस्र इष्टका.। ततस्तिस्र उभयतः प्रउगाकृतय·। ततो द्वे। तत एका चिबुकान्ता। एव षडुभयतः प्रउगा.। चतस्र प्रउगा । एव दशेष्टका एकस्मिन्प्रउगे भवन्ति।

तानि विंशतिः सर्वोऽग्निः संपद्यते ।। (२५७) (५)

Twenty such (triangles as described in Sutra 255) form the whole agni (257) [5]

One of the these triangles is the half of an oblong the area of which is equal to the tenth part of the whole agni

हसमुखोश्चतस्रश्चतसृभिः पादेष्टकाभिः संयोजयेत् । तत्तिर्यक् स्वयमातृण्णावकाश उपदध्यादिति तथा बहिर्दशेष्टकं प्रउगमापाद्याग्निक्षेत्र उप-

हितानि विंशति प्रउगानि सर्वोऽग्नि सगृह्णीयादिति । अत्रात्मनि मध्ये दक्षिणोत्तरा लेखामालिख्य पूर्वार्धे प्रत्यगग्राणि षट् प्रागग्राणि पञ्च । पश्चिमार्धे प्रत्यगग्राणि पञ्च प्रागग्राणि चत्वारि । एव विंशति । एवं शतद्वयसपत्ति अयमत्र प्रकार । अग्निक्षत्र तिलद्वयोन नवपञ्चशताङ्गुलायाम सार्धचतु पञ्चाशच्छतद्वयाङ्गुलपुरस्ताद् व्यास द्वादशतिलोनसप्ततिशताङ्गुल पश्चिमतिर्यङ्मानीकमेतोऽग्निमद्दीर्घ चतुरस्र विहृत्येष्टका कुर्यात् । तत्र द्वे करणे प्रउगमुभयत प्रउगमिति । प्रउगस्य पृष्ठ्यनीक दशाङ्गुल सार्धविंशतितिलम् । उभे पार्श्वे सार्धविंशतितिले त्रिषष्टघङ्गुले । ते द्वे पृष्ठ्यनीकप्रदेशाभ्या सगते उभयत प्रउगम् । प्रथमेन करणेनाशीतिरिष्टका । द्वितीयेन विंशशतम् । उपधाने पूर्वस्मिन्ननीके चतुर्विंशति प्रउगेष्टका प्रत्यगग्रा । तत पश्चादुभयत प्रउगास्त्रयोविंशति । तत पश्चाद् द्वाविंशति । तत एकविंशति । तत पश्चात्प्रागग्रा विंशति प्रउगा । तत पश्चाच्च विंशति प्रत्यगग्रा । तत उभयत प्रउगा एकोनविंशति । तत पश्चादष्टादश । तत सप्तदश । तत अपरस्मिन्ननीके प्रागग्रा षोडश प्रउगा । एवमुदीच्यो दशरीतय । द्विशत प्रस्तार ।

अपरस्मिन्प्रस्तारे ॥ (२५८) (६)

In the second layer—(258) [6]

विधिवक्ष्यते ।

प्रउगमध्येऽनूचीन विभजेत् ॥ (२५९) (७)

(Two) triangles are to be divided length ways (to be bisected by a perpendicular from the top to the base) (259) [7]

The triangle meant by the Sutra is one of the five large triangles into which the whole *agnikṣetra* may be divided

अग्निक्षेत्रे भाग प्रमाण व्यायतानि षड्भागप्रमाणायतानि पञ्च महाप्रउगानि शेरते । तत्र प्रत्यगग्राणि त्रीणि । प्रागग्रे द्वे । तेषां महाप्रउगानां प्रउगद्वयमिह विवक्षितम् । अनूचीनमिति प्रउगविशेषणम् । षड्भागायतमित्यर्थ । दक्षिणात प्रत्यगग्रस्थित प्रउगमध्ये भागप्रमाणपृष्ठ्यनीकमध्यादारभ्यापश्चिमसूक्ष्माग्रादालिखेत् । एवमुत्तरस्मिन्नपि पार्श्वे स्थित विभजेत् ते द्वे पार्श्वयोरुपधायेति वक्ष्यमाणत्वात् । प्रउगमिति च तस्येति च जात्येकवचनम् ।

तस्य षड्धा विभाग ॥ (२६०) (८)

These (two triangles lying on the south side and the north side of the *agnikṣetra*) are to be divided into six parts each (260) [8]

तस्य प्रउगावयवस्य षड्धा षोढानूचीन विभाग कार्य । तत्र प्रकार प्रत्यगग्र षड्भागायत महाप्रउगार्ध तिर्यक् त्रिधा विभजेत् । तत्र पूर्वखण्डस्य पूर्वतिर्यङ्मान्या समान्तराले द्वे चिह्ने कृत्वा प्रथमचिह्नादारभ्यार्जवेनापर तिर्यङ्मानी प्रत्यालिखेत् । एव द्वितीयचिह्नादारभ्य एव मध्यखण्डस्य पूर्वान्तमध्यादारभ्यार्जवेनापरान्तात्लिखेत् । एव विभक्ते प्रथमे खण्डे बाह्य पार्श्वत अर्ध प्रउगाकारेकेष्टका । मध्यतो द्वे दीर्घचतुरस्रे । मध्यमखण्डस्य बाह्यत एका प्रउगार्धा । अन्तरतएका दीर्घचतुरस्रा । अपरोभाग प्रउगार्धरूप एव । एव षड्धा विभाग । एवमुत्तरत । ता द्वादशेष्टका । तासु प्रउगार्धाकारा षट् । दीर्घेष्टकाकारा षट् ।

ते द्वे पार्श्वयोरुपदध्यात् ॥ (२६१) (९)

These two (triangles divided into six parts each) are to be placed on the two sides (the south side and the north side of the agni) (261) [9]

ते षड्धा विभक्ते द्वे प्रउगार्धे पार्श्वयो । षड्भागायामप्रमाणस्य द्विभागप्रमाणतिर्यङ्मानीकस्य चतुरस्रस्य पार्श्वयोर्दक्षिणोत्तरयो प्रत्यगग्रे वहिर्भूतकर्णपार्श्वे उपदध्यात् । एव द्वादशेष्टका उपहिता भवन्ति । एवमुपहितयो प्रउगार्धयोर्मध्यभूतचतुरस्रस्योपधानविधि ।

भागतृतीयायामाश्चतुर्थव्यासा कारयेत् ॥ (२६२) (१०)

Bricks are to be made as long as the third part (of the side of one of the fifteen squares composing the *agnikṣetra*) and as broad as the fourth part (262)[10]

इष्टका इतिशेष । भागस्य षट् तिलोन पञ्चाशीत्यङ्गुलप्रमाणस्य तृतीयो नवतिलाष्टाविंशत्यङ्गुलायाम । चतुर्थव्यासा । सप्ततिलैकविंशत्यङ्गुल व्यासा कारयेत् । ता बृहतीसञ्जिता ।

तासामर्धास्तिर्यग्भेदा ॥ (२६३) (११)

The other bricks equal to one half of the bricks of the first class produced by dividing the latter by a horizontal line (263) [11]

आयामस्य मध्ये भिन्नाः सप्ततिलैकविंशतिदीर्घाः (०शत्यङ्गुल-दीर्घाः ? ) सार्धचतुस्तिलचतुर्दशाङ्गुलव्यासा अर्धेष्टकाः कार्या इत्यर्थः ।

ता अन्तयोरुपधाय शेषमग्निं बृहतीभिः प्राचीभिः प्रच्छादयेत् ॥ (२६४) (१२)

Having placed these (bricks of the second class) on the east and west end of the agni, the remaining space is to be covered with large bricks of the first description, turned towards the east. (264) [12]

ता अर्धेष्टका दक्षिणोत्तरायता अन्तयोः पूर्वापरयोरिष्टका अष्टा-वष्टावुपधाय शेषमग्निं बृहतीभिरित्यादि तुल्यम् ।

अर्धेष्टकाभिः संख्यां पूरयेत् ॥ (२६५) (१३)

The number of two hundred is to be made full with ardhya-bricks. (265) [13]

पार्श्वयोरुपहित प्रउगार्धयोर्द्वादशेष्टकाः । मध्यभूतचतुरस्रापरान्तयोः । (०रस्रपूर्वा० ?) षोडशार्धेष्टकाः । मध्ये षट्त्रिंशच्छत बृहत्यः प्रागायताः । एवं चतुःषष्टिः शतमिष्टकाः । षट्त्रिंशन्न्यूना भवन्ति । श्रोण्यंसेषु नव नव बृहतीश्चतुरस्रकृता उद्धृत्याष्टादशाष्टादशार्ध्या निधेयाः । एवं द्विशतः प्रस्तारः । द्वितीये प्रस्तारे चत्वारि करणानि । प्रउगार्धानामेकं करणम् । तस्य तिर्यङ्मानी सपञ्चतिलचतुर्दशाङ्गुला । साष्टतिलसप्ततिशताङ्गुला कर्णरूपा बाह्यपार्श्वमानी । सद्वाविंशतितिला नव षष्टिशताङ्गुलाभ्यन्तर ऋजुपार्श्वमानी । अनेन षडिष्टकाः । दीर्घचतुरस्राणां द्वितीयम् । तस्य प्रउ-गार्धतिर्यङ् मान्येव तिर्यङ्मानी । तस्यैवाभ्यन्तर पार्श्वमान्येव पार्श्वमानी । अनेनापि षडिष्टकाः । बृहतीनां तृतीयम् । सनवतिलाष्टविंशत्यङ्गुला पार्श्वमानी । ससप्ततिलैकविंशत्यङ्गुला तिर्यङ्मानी । अनेन शतमिष्टकाः । अर्धेष्टकानां चतुर्थम् । सार्धचतुस्तिलचतुर्दशाङ्गुला तिर्यङ्मानी । सप्तति-लैकविंशत्यङ्गुला पार्श्वमानी । अनेन करणेनाष्टाशीतिरिष्टकाः । उपधाने पूर्वस्मिन्ननीके पार्श्वयोर्द्वे प्रत्यगग्रे बाह्यकर्णपार्श्वे प्रउगार्धे । तयोरभ्यन्तरतः प्रागायते द्वे द्वे दीर्घचतुरस्रे । तासां पश्चात्पूर्ववद् द्वे प्रउगार्धे । तयोरन्तरत एकैका दीर्घचतुरस्रा । तयोर्युगलयोः पश्चाद् द्वे प्रत्यगग्रे प्रउगार्धे । एवं द्वादशेष्टकाः । मध्यचतुरस्रस्य पूर्वापरयोरनीकयोरुदगायता अष्टावष्टा-वर्धेष्टकाः । तयोरन्तरत अष्टाभिरष्टाभिः प्रागायताभिर्बृहतीभिरुदीच्यः सप्तदश रीतयः । तत्र श्रोण्यंसेषु बृहतीनां नवचतुष्कमुद्धृत्य द्वासप्ततिरर्ध्या

निधेयाः । एवं द्विशतः प्रस्तारः । अत्र कल्पोक्तो विधिरनुसंधातव्यः । तत्रैवमुक्तम् । तस्य मात्रा यदि ग्रीवदघ्न पुरस्तान्नाभिदघ्न पश्चात् । यदि नाभिदघ्न पुरस्ताज्जानुदघ्न पश्चात् । यदि जानुदघ्न पुरस्ताद् गुल्फदघ्न पश्चात् । यदि गुल्फदघ्न पुरस्तात्सम भूमेः पश्चात् । स एष श्मशानचित् पितृलोककामस्येति । हस्तिपृष्ठवच्चिन्वीतेति तस्यार्थः । तदेवाह ।

**ऊर्ध्वप्रमाणमग्नेः पञ्चमेन वर्धयेत् ॥ (२६६) (१४)**

The height of the agni has to be increased by one fifth (6⅖th *anguls*) (26c) [14]

उच्छ्राय प्रमाणमग्नेः श्मशानचित ऊर्ध्वप्रमाणं रज्जु. मीत्वा पञ्चधा संभुज्य पष्ठ भाग प्रक्षिपेत् । श्मशानचितो द्विपाहस्त्रिपाहस्रावपि भवत. । यदि ग्रीवदघ्नमित्यादि दर्शनात् । साहस्र एकेष्टकोच्छ्रायप्रमाणम् । द्विपाहस्र इष्टिकाद्वयोच्छ्रायप्रमाणम् । त्रिपाहस्र इष्टकात्रयोच्छ्रायप्रमाणम् ।

**तत्सर्वं त्रेधा विभज्य द्वयोर्भागयोश्चतुर्थेन वा नवमेन वा चतुर्दशेन वेष्टकाः कारयेत् ॥ (२६७) (१५)**

Divide all this—the heights including the added fifth part—into three parts and make bricks with the fourth or the ninth or the fourteenth part of two of these three parts (with the fourth part in the *sāhasra*, with the ninth in the *dvisāhasra*, with the fourteenth in the *trisāhsra* agni ) (267) [15]

प्रक्षिप्तेन सह त्रेधा सभुज्यैकमवशिष्य शिष्टयोश्चतुर्थेन भागेनोर्ध्वप्रमाणभूतेन पञ्चमी नवमेन दशमी चतुर्दशेन पञ्चदशी च कारयेत् । वा शब्दश्च शब्दार्थे । उत्तरस्मिन्नपि वाक्ये तथा ।

**ताभिश्चतस्रो वा नव वा चतुर्दश वा चितीरुपधाय शेषमवाञ्चमक्ष्णया पच्छिन्द्यात् । अर्द्धमुद्धरेत् ॥ (२६८) (१६)**

Having made with these bricks either four or nine or fifteen layers, (according to the number of layers of the agni to be constructed), the remaining part of the height (amounting to one-third of the whole) is to be cut into two in a downward direction following the diagonal and one half of it to be removed (268) [16]

ताभिश्चतुर्थेन नवमेनचतुर्दशेनेत्युक्ताभिश्चतस्र साहस्रे नव द्विपाहस्रे चतुर्दश त्रिपाहस्रे चितीः प्रस्तारानुपधाय शेष तृतीय भागमवाञ्च पश्चा-

त्प्रवणमक्ष्णयापच्छिन्द्यात् । अर्धं तस्य भागस्योद्धरेत् । एवं प्रक्षेप उद्धृतो भवति । तत्र प्रयोगः । इदमुपधानमार्गेण क्वचित्प्रस्तार्यं पूर्वस्मिन्नन्ते ऊर्ध्वप्रमाणान्तेस्पन्द्या नियम्य प्रस्तारस्य पश्चिमान्त अधस्तात्स्पन्द्यायाइतरान्त स्पन्द्याया. पार्श्वे निधायानुस्पन्द्य प्रस्तारमक्ष्णयापच्छिन्द्यात् । इष्टकानामेव लक्षणमुक्तम् । उच्छ्रायप्रमाणौ द्वौ दण्डौ प्रस्तारायामप्रमाणयोरधरोत्तरयोरूर्ध्वौ स्थापयित्वा पूर्वस्य दण्डस्य शिरसि पाश प्रतिमुच्य पश्चिमस्य दण्डस्यापरमन्त निधाय पश्चिमदण्डाभावेऽपि समाया भूम्या प्रस्तारायामान्त निधाय तेनेदृशं कृत्वा(?) इष्टकारूपाणि विनवर्यं कारयेत् । गणित निपुणानामेतत्सुकरम् । इतरेपामशक्यमेव ।

**तस्य नित्यो विभागः । यथायोगमिष्टकानाᳫ ह्रासवृद्धी ॥**
(२६९) (१७)

The division of it (the remainder or fifth layer) is exact (it is divided into two equal parts); the lesser and larger measure of the bricks is to be taken so as to fit (the exigencies of the case). (269) [17]

भवत इति शेषः यथा युज्यते तथेष्टकाना ह्रासवृद्धी । अन्यथा वक्तुमशक्यत्वादेवमुक्तम् महतः प्रस्तारस्योर्ध्वप्रमाण एव विशेषः । इतरेषा प्रस्ताराणा यथापूर्वमेव । अत्र केचिद् वदन्ति इष्टकाना सपादयितुमशक्यत्वादिष्टकाना रूपेण मृदमेव प्रक्षिपन्ति । तदपि युक्तमयुक्तमिति विचारणीयं सूरिभि. ।

# नवमोऽध्यायः

कूर्मचितं चिन्वीत यः कामयेत ब्रह्मलोकमभिजयेयमिति विज्ञायते ॥ (२७०) (१)

He who wishes "may I conquer the world of Brahman' is to construct the agni in the shape of a tortoise, such is the tradition (270) [1]

छन्दश्चिदध्याये तथैव कूर्मचिदिति ब्राह्मण इत्युक्तमिह विज्ञायत इति शाखान्तर ब्राह्मण दर्शितम् । एतस्मादेव गम्यते स्वशाखाया ब्राह्मणाभावोन्यब्राह्मण इत्युक्त भवति । ब्रह्मलोक हिरण्यगर्भलोकम् ।

द्वयाः खलु कूर्मा भवन्ति वक्राङ्गाश्च परिमण्डलाश्च ॥ (२७१) (२)

There are two kinds of tortoises such with angular limbs and round ones (271) [2]

वक्राङ्गानि कुटिलाङ्गानि येषा ते वक्राङ्गा । एव परिमण्डलाङ्गा ।

अविशेषात्त मन्यामहे । अन्यतरस्याकृतिरिति ॥ (२७२) (३)

As no particular characteristic is mentioned, we adopt both, a description of the form of both (follows) (272) [3]

व्याख्यातमेतद्द्वयचक्रचितौ ।

अथाग्निं विमिमीते । चतुरस्र आत्मा भवति । तस्य दश प्रक्रमाः पार्श्वमानी भवति ॥ (२७३) (४)

For this citi now the *agnikṣetra* is measured out' the ātman is a square its side is three hundred *angulis* long (273) [4]

दशप्रक्रमप्रमाणेन चतुरस्र कुर्यादित्यर्थ ।

तस्य द्वाभ्या द्वाभ्या प्रक्रमाभ्याऽ स्रक्तीनामपच्छेद ॥ (२७४) (५)

The corners of this square are to be cut off with sixty *angulis* each (274) [5]

तस्यात्मन श्रोण्यसाना द्वाभ्या द्वाभ्या स्रक्तीनामपच्छेद कर्तव्य - एव श्रोण्यसेभ्योऽष्टौ चतुर्थ्यो निरस्ता भवन्ति ।

**पूर्वस्मिन्ननीके प्रक्रमप्रमाणानि चत्वारि चतुरस्राणि कृत्वा तेषा ये अन्त्ये ते अक्ष्णयापच्छिन्द्यात् ॥ (२७५) (६)**

Having made a (middle of) the east side (of the ātman) four squares of thirty *angulis* (side) one is to divide the two outmost of them by the diagonal (and to remove half of each square) (275) [6]

पूर्वस्मिन्पार्श्वे पार्श्वयो प्रक्रमद्वयमवशिष्य मध्य आत्मनो बहिस्तिर्यञ्चि प्रक्रमप्रमाणानि चत्वारि चतुरस्राण्यनीकससृष्टानि कृत्वा तेषा ये अन्त्ये चतुरस्रे ते अक्ष्णयापच्छिन्द्यात् । अग्नीशानदले त्यजत् ।

एव दक्षिणत एव पश्चादेवमुत्तरत ॥ (२७६) (७)

The same is to be done on the south side the west side and the north side (276) [7]

चतुरस्रकरणाद्यपच्छेदान्तो विधि सर्वत्रत्यय ।

स आत्मा ॥ (२७७) (८)

This (the parts described above) forms the *ātman* (277) [8]

एवमात्मनि चतुरधिक शत चतुर्थ्य ।

शिर पञ्चपदायाममर्धपुरुषव्यासम् ॥ (२७८) (९)

The head is seventy-five *angulis* long sixty *angulis* broad (278) [9]

एव पञ्च चतुर्थ्य । तत्र ।

तस्याऽसौ प्रक्रमेण प्रक्रमेणापच्छिन्द्यात् ॥ (२७९) (१०)

The two east corners of the head are to be cut off with thirty *angulis* each (279) [10]

एवमपच्छिन्ने परिशिष्टाश्चतस्रश्चतुर्थ्यो भवन्ति ।

स्रक्त्यपच्छेदे पादानुन्नयेत् ॥ (२८०) (११)

There where the corners have been cut off (from the square forming the middle part of the *ātman*) the feet are to be lengthened out (280) [11]

स्रक्तीनामपच्छेदे प्राप्तमस्रक्तीनामपच्छेदे। जातावेकवचनम्। अप-च्छेदेषु पादानुन्नयेत्। बहिः कुर्यात्। अवान्तरदिक्षु पादान्कुर्यादित्यर्थः।

तस्य द्विपदाक्ष्णया तिरश्ची तद्द्विगुणायाममनूची ॥ (२८१) (१२)

The breadth of it (of one foot; the words apply in the first place to the south east foot) is equal to the diagonal of a square, the sides of which is thirty angulis (= two padas) long ($\sqrt{1800}$ *ang*); thus doubled is the length (281) [12]

तस्य पादस्य द्विपदाक्ष्णया चतुर्थ्यक्ष्णया सार्धचतुर्दशतिलसहितद्वि-चत्वारिंशदङ्गुला तिरश्ची। तद्द्विगुण पञ्चतिलोनपञ्चाशीत्यङ्गुलमनूची आयामः। दक्षिणपूर्वंसक्त्यपच्छेदमध्यतश्चतुर्थ्यक्ष्णयामात्र तिर्यङ्मान परिगृह्य कोणदिश प्रति तद्द्विगुणायाम पादार्थं दीर्घचतुरस्रं कुर्यादित्यर्थ.। एव चतस्रश्चतुर्थ्यः। तत्र।

तस्य द्विपदाक्षणया पूर्वमꣳसमपच्छिन्द्यात् ॥ (२८२) (१३)

To this (oblong) the eastern corner (the *ansau* of this oblong are turned towards the east and south, not as usually towards the north-east and south-east) is to be cut off with the diagonal of a square, the side of which is thirty *aangulis* long

This is done by drawing a line from the middle of the north-east side towards the south corner (282) [13]

पूर्वपार्श्वस्य मध्ये चिह्न कृत्वा परासाल्लिखेत्। एवमेका चतुर्थी निरस्ता भवति। तिस्रोऽवशिष्यन्ते।

एतेनेतरेषा पादानामपच्छेदा व्याख्याताः ॥ (२८३) (१४)

Thereby the cutting off (of a corner of each) of the there (?) other feet is explained (283) [14]

अपच्छेदशब्देन करणमपि विवक्षितम्। अन्यथाऽपच्छेदासभवात्।

अपरयो पादयोरपरावꣳसावपच्छिन्द्यात् ॥ (२८४) (१५)

In the two western feet the western corners are to be cut off (284) [15]

अपरपार्श्वस्य मध्ये लक्षण कृत्वा पूर्वांसाल्लिखेत्। एव पादेषु द्वादश चतुर्थ्यः।

एव७ सारत्निप्रदेश सप्तविध सपद्यते ॥ (२८५) (१६)

In this manner the sevenfold agni together with the two *aratnis* and the *pradeśa* is brought about (285) [16]

आत्मनि चतु शत चतुर्थ्य । शिरसि चतस्रश्चतुर्थ्यं । पादेषु द्वादश एव विंशशत चतुर्थ्यं ।

तस्येष्टका कारयेत्पुरुषस्य चतुर्थ्यं । तासामर्ध्या पाद्याश्च ॥ (२८६) (१७)

For this *citi* are to be made square bricks of thirty *aṅgulis* side bricks equal to a half and bricks equal to a quarter of those first mentioned (made by drawing the diagonals) (286) [17]

नित्यमश्ण्यापच्छेदनमनादेश इति ह्युक्तम् ।

अध्यर्धपाद्याश्चतुर्भि परिगृह्णीयात्प्रक्रमेण द्वाभ्या पदाभ्यां पदसविशेषेणेति ॥ (२८७) (१८)

A brick the area of which amounts to the fourth part of the area of a brick equal to one *caturthi* and a half (the *caturthi* is a square of 30 *aṅgulis* side) is to be enclosed with four sides one 30 *aṅgulis* long two 15 *aṅgulis* long and one equal to the *savíeṣa* of 15 (287) [18]

अर्धाधिका पादेष्टका चतुर्भि फलक कुर्यात् । प्रक्रमेणोत्तर फलकम् । द्वाभ्या पदाभ्या पश्चिमदक्षिणफलके पदप्रमाणे इत्यर्थ पदसविशेषेण तिलोनकविंशत्यङ्गुलेन । पूर्वं कर्णरूपमित्यर्थ ।

ते द्वे यथा दीघस७श्लिष्टे स्याता तथैका कारयेत् ॥ (२८८) (१९)

Then one brick is to be formed by joining two of these (bricks mentioned in the preceding sūtra) with their long sides (288) [19]

व्याख्यातमिदम् । एकामपरामित्यर्थ ।

द्विपदाक्ष्ण्यार्धेन समचतुरस्रामेकाम् ॥ (२८९) (२०)

A square brick is to be made with half the diagonal of a square the side of which is two *padas* long (289) [20]

तिलाधिकैकविंशत्यङ्गुलेन समचतुरस्रमेकाम् । एव षट् करणानि । तत्राष्टाचत्वारिंशच्छतद्वय चतुर्थ्य । पञ्चशत षट्सप्ततिश्चार्ध्या । शत

पाद्या । अष्टावध्यर्धपाद्या । तथा हंसमुख्य । पष्टि समचतुरस्रा साध्यी । षोडानाकसदो द्वे पाद्ये अर्ध्या द्वय पद् चतुर्थ्य । एव पञ्चसहस्रमिष्टका ।

उपधाने शिरसोऽग्रे चतुरस्रामुपदध्यात् ॥ (२९०) (२१)

In placing the bricks a square brick is to be placed in the top of the head (290) [21]

यथा महादिक्षु चतुरस्रेष्टकासक्तयो भवन्ति तथोपदध्यात् ।

हंसमुख्याववस्तात् ॥ (२९१) (२२)

Two *hansamukhis* to the west of it (291) [22]

पश्चात्प्रागग्रे हंसमुख्यावुपदध्यात् । शिरसि पश्चाद्भागे प्रक्रमप्रमाणमवशिष्य परिशिष्टक्षेत्रे प्रागग्रे हंसमुख्यावित्यर्थ ।

पञ्च-पञ्च चतुरस्रा द्वे द्वे पादेष्टके इति पादेषूपदध्यात् ॥ (२९२) (२३)

In each foot five square bricks and two quarter bricks are to be placed (292) [23]

पादाग्रापच्छेदाक्षणायासगनदीघपार्श्वे द्वे द्वे पादेष्टके । शिष्टपादक्षत्रपु त्रिभिस्त्रिभिश्चतुरस्राभिरेकैका रीति । द्वाभ्या द्वाभ्यामपरा । एव पादेष्वष्टौ पाद्या । विंशतिश्चतुरस्रा ।

यद्यदपच्छिन्न तस्मिन्नर्धेष्टका उपदध्यात् ॥ (२९३) (२४)

Wherever a piece has been cut off (from the *agnikṣetra*) there half bricks are to be placed (293) [24]

चावधारणे । यदवच्छिन्न क्षत्रमनीकपार्श्वेष्वात्मापच्छेदेषु च अर्धेष्टका एवोपदध्यात् । एवमनीकपार्श्वेष्वष्टावर्ध्या आत्मापच्छेदेषु चाष्टौ ।

शेषमग्नि चतुर्भागीयाभि प्रच्छादयेत् ॥ (२९४) (२५)

The remaining part of the agni is to be covered with *caturthis* (294) [25]

एव प्रच्छादिते पञ्च पञ्चाशदिष्टका न्यूना भवन्ति । तत्र ।

अर्धेष्टकाभि सख्या पूरयेत् ॥ (२९५) (२६)

The number (of two hundred bricks) is to be made full with half bricks (substituted for *caturthis*) (295) [26]

तत्राग्निधर्माविरोधेन पूरणस्येष्टत्वात् दक्षिणोत्तरपार्श्वयो सप्तविंशति. सप्तविंशतिश्चतुर्थ्य अर्धेष्टकारूपेण भेद्या । तत्र दक्षिणपार्श्वस्था प्रागुत्तरसविशेषा । विपरीता उत्तरपार्श्वस्था । शिरसि सूत्रोक्ता चतुरस्रेष्टकामुद्धृत्यान्तर्दीर्घपार्श्वे पादेष्टके निदध्यात् । एवं सूत्रभङ्गेनाप्यग्निधर्माविरोध आपाद्य सर्वत्र । तत्रैवमुपधानम् । पादवर्जं शिरसा सह द्वादशरीतय । दक्षिणमनीकम् । मध्ये द्वे चतुर्थ्यौ । अभितो द्वे अर्ध्ये । द्वितीयस्या मध्ये पद् चतुर्थ्यं पार्श्वयोर्द्वे अर्ध्ये । तृतीयस्यामादितोऽर्ध्या ततश्चतुर्थी ततो द्वादशार्ध्यास्तत एका चतुर्थी ततोऽर्ध्या च । चतुर्थ्यामादितो द्वे चतुर्थ्यौ ततश्चदंशार्ध्यास्तत एका चतुर्थी । पञ्चम्यामाद्यन्तयोरर्ध्ये मध्ये चतुर्थंरीतिवत् । षष्ठ्यामादितस्तिस्रश्चतुर्थ्यस्ततश्चतुर्दशार्ध्यास्ततस्तिस्रश्चतुर्थ्यस्तत एका हंसमुखी प्रागग्रा वत उत्तरपूर्वकोट्या सह दक्षिणाग्रान्तर्मैका पाद्या । एवमुत्तर पार्श्वम् । दक्षिणपार्श्वस्था अर्ध्या प्रागुदक् सविशेषा । विपरीता इतरा पादेषु चतुरस्रभूताशेषु चतस्रश्चतुरस्राः । छेदाशेषु मध्यत एकैका चतुरस्रा । शेषेषु पादेष्टके । एव पादेष्वष्टाविंशति । शिरसि पञ्च । आत्मनि सप्तषष्टिशतम् । अस्मिन्प्रस्तारे चतुश्चत्वारिंशच्चतुर्थ्य । चतुर्विंशतिशतमर्ध्या । दशपाद्या । द्वे हंसमुख्यौ । विंशतिश्चतुरस्राध्या ।

Noteworthy is the remark of the commentator about the unavoidable division of the square brick in the top of the head into two triangular bricks which has to take place against the direction contained in the Sutra 290 (sutra bhañgena) because without this division it would be impossible to place two hundred bricks and at the same time not to destroy the symmetry—the *paśudharmatva* of the agni

अपरस्मिन्प्रस्तारे शिरसोऽग्रे हंसमुखीमुपदध्यात्पादेष्टके अभित ॥ (२९६) (२७)

In the second layer place a *hansamukhi* brick in the top of the head a quarter-brick on each side of it (296) [27]

दक्षिणतो दक्षिणाग्रान्तर्भा । विपरीतोत्तरा ।

तयोरवस्तादभितो द्वे द्वे अध्यर्धपाद्ये विषूची ॥ (२९७) (२८)

To the west of each of these two (quarter-bricks) on both sides two bricks which are equal to the quarter of an *adhyardha* turned towards different directions (the tops of two being turned towards the east, those of the two others towards the west) (297) [28]

तयो पादेष्टकयो पश्चाद् द्वे द्वे अध्यर्धपाद्ये विपूची। विपरीताग्रे। द्वन्द्वयो पूर्वे प्रागग्रे बहिर्दीर्घपार्श्वे। पश्चिमे प्रत्यगग्रे अन्तर्दीर्घपार्श्वे।

तयोरवस्तादभितश्छेदसंहिते द्वे पादेष्टके ॥ (२९८) (२९)

To the west of these on each side a (triangular) quarter-brick connected with the cut (i e situated in such a way that one of its sides coincides with the edge of the agni) (298) [29]

तयोरध्यर्धपाद्याद्विकयो पश्चाच्छेदसंधानार्थे प्रागग्रे प्रत्यग्ने द्वे पादेष्टके।

द्वे द्वे द्विपदे तिस्रस्तिस्रो ऽर्धेष्टका इति पादेषूपदध्यात् ॥ (२९९)(३०)

In every foot two *dvipada*-bricks and three half bricks are to be placed (the half of one *dvipada* in each foot extends into the ātman) (299) [30]

द्विपदाद्वन्द्वस्यैकैकस्मिन्पाद उपधानासंभवात्सामर्थ्याद् द्विकानामभ्यन्तरा पादात्मनो संधिषु भवन्ति। अवान्तरदिक्ष यथा चतुर्थीना स्रक्तयो भवन्ति तथाभ्यन्तरा संधावुपधेया। बहिर्भूता अपि पूर्वोपहितस्रक्तिभि ससृष्टा एवोपधेया। द्विकाना मध्येषु स्रक्तिसंस्पृष्टाग्रे बहिर्दीर्घपार्श्वे द्वे द्वे अर्धेष्टके। पादाना मध्येष्वेकैकार्धेष्टका। एवं पादेष्वष्टौ चतुर्थ्य। द्वादशार्ध्या। एव विंशति।

यद्यदपच्छिन्न तस्मिन्नर्धेष्टका पादेष्टकाश्चोपदध्यात् ॥ (३००) (३१)

Where something had been cut off (i e on the edge of the *agnikṣetra*) half bricks and quarter bricks are to be placed (300) [31]

यत्र यत्रार्धेष्टका सम्भवन्ति तत्र तत्रार्धेष्टका एव। अन्यत्र पादेष्टका। अनीकेषु पार्श्वस्थाध्यर्धानामात्मनश्च सन्धावष्टावर्ध्या। तिसृष्वनीकेषु पञ्च पञ्च पाद्या। अर्ध्याना पादान्तानां चान्तरालेषु षोडश पाद्या इत्यर्थ.।

शेषमग्नि चतुर्भागीयाभि प्रच्छादयेत् ॥ (३०१) (३२)

The remaining part of the agni is to be covered with *caturthi* bricks (301) [32]

एव प्रच्छादित एकचत्वारिंशदिष्टका न्यूना भवन्ति। तत्र।

अर्धेष्टकाभि: सख्या पूरयेत् ॥ (३०२) (३३)

And finally the number (of 200 bricks) is to made full with half bricks (302) [33]

अर्धेष्टकाभिरेव न पादेष्टकाभि । तत्रैवमुपधानम् । पादवर्जं शिरसा सह प्राच्यस्त्रयोदश रीतय । तत्र दक्षिणस्यामनीकाग्रे पञ्च पाद्या । तासा त्रिस्रो ऽन्तर्दीर्घा द्वे बहिर्दीर्घे । द्वितीयस्यामादित पादमूलपूर्वसन्धिमारभ्य दक्षिणाग्रान्तर्दीघपार्श्वा पाद्या । तस्या पुरस्ताद् बहिर्दीर्घोदगग्रैका पाद्या । तस्या पुरस्तात्प्राग्दक्षिण बाह्यदीर्घ कर्णाभ्यन्तर प्रागुदगग्राध्यैका ततस्तिस्रश्चतुथ्य तासा पुरस्तात्प्रागुदग्दीघ पार्श्वाभ्यन्तर प्रत्यग्दक्षिणाग्रैकाध्यर्धा । तस्या पुरस्ताद् बहिर्दीर्घोदगग्रैका पाद्या । तस्या पुरस्ताद् दक्षिणाग्रान्तर्दीघपार्श्वैका पाद्या । एव नवेष्टका द्वितीया । तृतीयस्यामादित पादमूले बाह्यकर्णैकाध्यर्धा । तस्या पुरस्तात् पादात्मसधावेका चतुर्थी । तस्या पुरस्तात्सप्तचतुथ्य । पूर्वसन्धावेका चतुर्थी । तस्या पुरस्ताद् बाह्यकर्णैकाध्यर्धा । एवमेकादशेष्टका तृतीया । चतुर्थ्यामादित प्रत्यगग्रा पाद्या । तस्या उत्तरत प्रागग्रा बहिर्भा । तयो पुरस्तान्नव चतुर्थ्ये । तत प्रागग्रा पाद्या । तस्या उत्तरत प्रत्यगग्रा बहिर्भा पाद्या । एव त्रयोदशेष्टका चतुर्थी रीति । पञ्चम्यामादितो ऽनीकात्मसधौ बहि कर्णा प्रागुदगग्रैकाध्यर्धा । ततो नव चतुर्थ्य । तत प्रत्यगुदगग्राबाह्यकर्णाध्यर्धा । एवमेकादश पञ्चमी रीति । षष्ठ्यामादित प्रत्यगग्रा पाद्या । तस्या उत्तरत प्रागग्रा पाद्या । तयो पुरस्तादेकादश चतुथ्य तत प्रागग्रा पाद्या ततोऽनीक शिरसो सधो प्रत्यगग्राध्यर्धा पाद्या दीर्घा । तस्या पुरस्ताद् विपरीता । तस्या पुरस्ताद् दक्षिणाग्रान्तर्भा पाद्या । एव सप्तदशेष्टका षष्ठी रीति । मध्यरीत्यामादित प्रत्यगग्रा पाद्या । ततस्त्रयोदश चतुर्थ्य । ततो हसमुखी प्रागग्रा । एव पञ्चदश । दक्षिणापक्षवदुत्तर पक्ष । पादेपूपहित शिष्टेपु द्वे द्वे अर्धे । एकैका चतुर्थी । एव चतस्रश्चतुर्थ्य । अष्टावर्ध्या । एकचत्वारिंशद्धूना । तृतीयादिषु चतसृषु पञ्च पञ्च चतुर्थीरुद्धृत्य चत्वारिंशदर्ध्या दक्षिणोत्तर सविशेषा उपधेया । एवमुत्तरस्मिन्पार्श्वे विपरीत सविशेषा । शिरस्येका चतुर्थीमुद्धृत्य द्व अर्ध्ये उपधेये । अस्मिन्प्रस्तारे ऽष्ट पञ्चाशच्चतुथ्य । द्वयधिकशतमर्ध्या । पञ्च त्रिंशत्पाद्या । चतस्रोऽध्यर्धपाद्या । एकाहसमुखी । शिरसि द्वादशेष्टका । पादेषु विंशति । आत्मन्यष्टषष्टिशतम् ।

# दशमोऽध्यायः

अथापरः ॥ (३०३) (१)

The second kind of the construction in the form of a tortoise follows (303) [1]

अपरः कूर्मचिदुच्यत इति शेषः ।

पुरुषस्य षोडशीभिर्विंशशतं सारत्निप्रादेशः सप्तविधः संपद्यते ॥ (३०४) (२)

One hundred and twenty bricks, of which one is equal to the sixteenth part of a *purṣa*, constitute the seven-fold *agni* with the two *aratnis* and the *prādeśa*. (304) [2]

व्याख्यातमेतन्मण्डलद्रोणचयने ।

तासां पञ्चषोडशीरपोद्धृत्य शेषाः परिमण्डलं करोति ॥ (३०५)(३)

Five of those are to be laid aside, the remaining ones to be formed into a circle (305) [3]

तासां षोडशीनां पञ्चषोडशीरपोद्धृत्य शेषाः षोडशीः परिमण्डलं करोति । तत्र समस्तमग्निक्षेत्रं लक्षमष्टौ सहस्राण्यङ्गुलयः । तस्मात्पञ्चानां षोडशीनां क्षेत्रं चत्वारि सहस्राणि पञ्चशतानि चाङ्गुलानि पृथक् कृत्य लब्धं लक्षं सहस्रत्रयं पञ्चशतानि । तस्य मूलं त्रीणि शतान्येकविंशतिश्चाङ्गुलयः पञ्चविंशति तिलाश्च । सा चतुरस्रकरणी । तया समचतुरस्रं कृत्वा चतुरस्रं मण्डलमित्यादिना सार्धकाशीति शताङ्गुलेन विष्कम्भार्धेन परिमण्डलं करोति ।

तदुत्तरेण द्रोणचितं । व्याख्यातम् ॥ (३०६) (४)

This (*i e.*, how to make the circle, etc ) has been explained under the second kind of *droṇaciṭ*. (306) [4]

तत्कूर्मचिदुपधानमुत्तरेण परिमण्डल-द्रोणचिता व्याख्यातम् । तत्र विशेषमाह ।

प्रथ ता पञ्चषोडश्यस्ताभिरवान्तरदिक्षु पादानुन्नयेत् ॥ (३०७) (५)

With the five sixteenth bricks (which had been put aside) feet are to be lengthened out towards the four intermediate directions (307) [5]

उद्धृतानां षोडशीना चतसृभिरवान्तरदिक्षु पादानुन्नयेत् ।

शिर पुरस्तात् ॥ (३०८) (६)

(With the remaining fifth brick) the head is to be lengthened out on the east side (308) [6]

उन्नयेदित्येव ।

तासा परिकर्षण व्याख्यातम् ॥ (३०९) (७)

The cutting of these bricks by the circle has been explained (See the second *dronacit* in the same manner as there the five bricks are placed touching the large square before it has been turned into a circle, then the circle being drawn cuts off a part from each brick this part is joined to the outward part of the brick) (309) [7]

तासा षोडशीना परिकर्षण सर्वतो लेखन व्याख्यातम्। षोडशी पुरस्ताद्विशय उपधायेत्यादिनोक्तमित्यर्थं ।

प्रधीनां॰ सप्तधा विभाग । प्रधिमध्यमा प्रक्रमव्यासा भवन्ति ॥ (३१०) (८)

The (four) *pradhis* (the segments of the large circle lying round the largest possible square constructed in the circle) are divided into seven parts each the bricks situated in the middle of the *pradhis* are one *prakrama* broad (310) [8]

तदुत्तरेण द्रोणचिता व्याख्यातमित्यस्यैव प्रपञ्चम् ।

यदतिरिक्त॰सपद्यते तच्चतुरस्राणामध्यर्धाभिर्योयुज्येत ॥ (३११) (९)

The excess (of bricks) which results (from this arrangement) is set right by the employment of bricks the area of which is equal to one and a half square brick When we divide the

agni into the parts mentioned in the preceding sūtras and in the description of the second droṇacit, the result is 206; the six bricks in excess are removed by employing twelve *adhyardhās* instead of eighteen *caturthīs* (see further on). (311) [9]

मण्डलमध्यचतुरस्रे चतुश्चत्वारिंशच्छतमिष्टकाः शेरते । प्रधिमूलेषु चतुर्विंशतिश्चतुरस्राः । प्रधीष्टका अष्टविंशतिः । प्रथमे प्रस्तारे शिरसोऽवस्तात्प्रधिमध्यमस्थाने एकविंशतिरिष्टकाः । शिरस्येका प्रधिमध्यमा । अष्टौ पादेषु । एवमुपहिते यदतिरिक्तं सम्पद्यते तच्चतुरस्राणामध्यर्धाभिर्योज्यते युज्यत इत्यर्थः । यत्तदिति सामान्य निर्देशः । अध्यर्धेष्टकानामर्धा शस्याक्ष्णयापच्छेदः नित्यमक्ष्णयापच्छेदनम् ।

अपरस्मिन्प्रस्तारे ॥ (३१२) (१०)

In the second layer—

विशेषो वक्ष्यत इति शेषः ।

पादानाᳫशिरोवद्विभागः शिरसः पादवत् ॥ (३१३) (११)

—the feet are to be divided as the head (was divided in the first layer) and the head as the feet (were in the first layer).—In the second layer, the four corners of the large square in the middle of the citi are turned towards the east, north etc., consequently the *pradhis* towards the north east, north-west, etc., so that the feet lie adjoining the middle of the *pradhis*, then the middle brick from the *pradhi* is placed into the end of the foot and the void place—resulting from removing the brick—covered with two bricks. The head in the second layer is divided into two parts, corresponding to the division of the feet in the first layer. (313) [10]

द्रोणचितो द्वितीय प्रस्तारे प्रधिमध्यमामोष्ठ उपधायावस्तात्तद् द्वेधा विभजेदिति यदुक्तं तदिह मण्डलकूर्मचितौ द्वितीय प्रस्तारे पादाना भवति । शिरसः पादवत् । द्वेधाविभाग इत्यर्थः । प्रथमे प्रस्तारे विपरीतमुपधानमित्युक्तं भवति । प्रधिमध्यमामोष्ठ उपधायेत्यस्य प्रथमे प्रस्तारे विनियोगात् । मण्डलमध्य चतुरस्रस्य प्रस्तारद्वयेऽपि स्यचक्रचिद् व-स्रक्तयो भवन्ति । अयमत्र प्रकारः । अग्नि मध्ये शङ्कुं निहत्य पञ्चदशाधिक शतषोडशीना करण्या सपञ्चविंशति-तिलैकविंशत्यधिकश तत्रयाङ्गुल्या चतुरस्रं विहृत्य चतुरस्रं मण्डल चिकीर्षन्निति न्यायेन सार्धैकाशीति शता-

ङ्गुलेन विष्कम्भार्धेन मण्डलं परिलिख्य मण्डलशङ्कोः पुरस्तात् त्रिंशदङ्गुले-नशङ्कुं निहत्य मण्डलपूर्वान्ते परिधेः पश्चादेकोनचत्वारिंशत्तिले विष्क-म्भान्ते शङ्कुं निहत्य तं शिरसः पश्चान्मध्यशङ्कुं परिगृह्य प्रक्रमप्रमाणेन शिरसश्च चतुरस्रं कुर्यात् । एवं मण्डलप्रकृतभूतचतुरस्र उभयतो ऽक्ष्णाया रज्जुं नियम्य चतुरस्रमध्यशङ्कुं परिगृह्य चतसृषु कोणदिक्षु प्रक्रमे प्रक्रमे ऽतीते शङ्कवः । परिधेरभ्यन्तरतः कोणदिक्ष्वेकोनचत्वारिंश-त्तिले शिरोवच्छङ्कवः । ततः प्रभृति विदिक्षु पदार्थानि प्रक्रमप्रमाणानि चत्वारि चतुरस्राणि कृत्वा विष्कम्भार्धशङ्कोरन्तर शङ्कुषु प्रतिमुच्य शिरः पदार्थानां चतुरस्राणामेकर्मसमारभ्येतरादंसादालिखेत् । मण्डलमध्य एकोनविंशतितिलसहितेन पञ्चपञ्चाशच्छतद्वयाङ्गुलेन विदिक्षु यथा स्रक्त्यः प्रथमे प्रस्तारे तथा चतुरस्रं कृत्वा तस्य करण्या द्वादशेन त्रयोदशतिलसहितैर्विंशत्यङ्गुलेनै का: कुर्यात् । प्रधीनां चत्वारि करणानि । त्रिकोणमाद्यम् । तस्य पश्चिमफलकं द्वाविंशदङ्गुलं सतिल-त्रयम् । उत्तरं पार्श्वं पञ्चविंशत्यङ्गुलं साष्टादशतिलम् । एकचत्वारिंश-दङ्गुलं तृतीय कर्णरूपं धनुरिव तक्षेत् । यथा चत्वारिंशदङ्गुलं तिलाः-शरः । उपान्त्यस्य पूर्ववत्पश्चिम फलकम् । उपान्तस्योत्तरवद् दक्षिणं फलकम् । एकचत्वारिंशदङ्गुल सपञ्चतिलमुत्तरं फलकम् । साष्टविंशति-तिलपञ्चत्रिंशदङ्गुलं कर्णरूप तद्धनुरिव तक्षेत् । त्रिंशत्तिलाः शरः ।

तृतीयस्य पश्चिमं फलकं षट्तिलं नवचत्वारिंशदङ्गुलम् । दक्षिणं सतिलद्वयविंशत्यङ्गुलम । सपञ्चतिलमेकत्रिंशदङ्गुलमुत्तरम् । सचतुर्दश-तिलं पञ्चाशदङ्गुल चतुर्थं कर्णरूपं तद्धनुरिव तक्षेत् । यथाष्टपञ्चाशत्ति-लाः शरः । प्रधिमध्यमायाः पूर्वपश्चिमे प्रक्रमप्रमाणे । दक्षिणोत्तरे स पञ्चतिले एकत्रिंशदङ्गुले । तद्धनुरिव तक्षेत् । त्रिंशत्तिलाः शरः । पादशि-रसामुपधानार्थानि त्रीणि करणानि । तेषां मण्डलसन्धावुपधेयस्य सषट्तिले अष्टाङ्गुले दक्षिणोत्तरफलके । त्रिंशदङ्गुले पूर्वपश्चिमे । पश्चिम मण्डलसं-धिगतपार्श्वं धनुराकार तक्षेत् । अन्तर्वक्रं भवति यथा नवत्रिंशत्तिलाः शरः । तस्याः पुरस्तादुपधेयस्य षोडशतिलहीनैकविंशत्यङ्गुले दक्षिणोत्तरफलके । पूर्वपश्चिमे प्रक्रमप्रमाणे । पूर्वफलकं धनुरिव तक्षेत् । नवत्रिंशत्तिलाः शरः । पादशिरसामग्र उपधेयाया उद्धृतायाः प्रधिमध्यमायाः स्थान उपधे-ययोरेकं करणम् । त्रिंशदङ्गुले द्वे फलके । इतरे पञ्चदशाङ्गुले पूर्वप-श्चिमे । पक्ष्यापूरणार्थं चतुरस्राध्यर्धेष्टके पूर्वापरे समस्य तयोः पूर्वां प्रागुदक्-शविदोषामक्ष्णयापच्छिन्द्यात् । एवं नव करणानि । उपधाने प्रथमे प्रस्तारे चतुरस्रस्यावान्तरदिक्षु स्रक्त्यः । चतुरस्रमध्ये चतुश्चत्वारिंशच्छतमिष्टकाः । प्रधिमूलमध्येषु चतुर्विंशतिश्चतुरस्राः । प्रधिष्वष्टाविंशतिः । पूर्वस्मिन्प्रधौ

प्रधिमध्यमा शिरस्युपधाय तस्या अवस्ताद् द्वे चतुर्थ्यर्ध्ये उपदध्यात् । चतुर्षु पादेषु मण्डलसधावेकैकामन्तर्वका ह्रस्वेष्टकाम् । पुरस्ताद् बहिर्वका बृहतीम् । एव षडिष्टका अतिरिच्यन्ते चतुरस्रस्रक्तिष्वग्निधर्मानुरोधेनाष्टादश चतुरस्रा उद्धृत्य द्वादशाध्यर्धेष्टका उपदध्यात् । एव द्विशत प्रस्तार । अपरस्मिन्प्रस्तारे मण्डलमध्यचतुरस्रस्य महावेदिस्रक्तय । पादेषु प्रधिमध्यमानामुपधानम् । तेषामभ्यन्तरश्चतुर्थ्यर्धा । शिरसि ह्रस्वबृहत्योरुपधानम् । अत्रापि षडतिरिच्यन्ते । मण्डलमध्यचतुरस्रे पूर्ववदष्टादश चतुरस्रेष्टका उद्धृत्याग्निधर्मानुरोधेन द्वादशाध्यर्धा उपदध्यात् । एव द्विशत प्रस्तार ।

व्यत्यास चिनुयाद्यावत प्रस्ताराꣳश्चिकीर्षेत् ॥ (३१४) (१२)

These two layers are to be employed by turns for as many layers as one intends to make (314) [11]

सर्वशेषार्थमन्ते वचनम् ।

कूर्मस्यान्ते तनुपुरीषमुपदध्यात् ॥ (३१५) (१३)

A little loose earth is to be put on the edge of the tortoise construction (315) [12]

अन्ते पर्यन्ते । तनु अल्पम् । पुरीषमुपदध्यात् ।

मध्ये बहुलम् ॥ (३१६) (१४)

A thick layer of loose earth is to be placed on the middle of the construction (316) [13]

प्रभूत मध्ये । उत्पृष्ठ इति कल्प उक्तमेतद् । पुरीषेणैव सपाद्यमिति भाव ।

एतदेव द्रोणे विपरीतम् ॥ (३१७) (१५)

The reverse takes place in the *drona* construction This supplementary rule for the *drona* is given here for shortness sake a thick layer of earth has to be placed on the margin of *drona* a thin one on its middle (317) [14]

मध्ये तनु पुरीषम् । अन्ते बहुलमिति । मध्ये निम्नमिव करोतीति द्रोणचित्युक्तम् । एव सपाद्यमिति भाव । अत्र कल्पोक्तो सविशेषोऽनुसधेय । तत्रैवमुक्तम् ।अथ हैष द्रोणचिद् ब्राह्मणो मध्य उत्पृष्ठ परितस्तनु । तस्यैव

सतोऽरत्निमात्रेण प्राक् शिर इव निरूहतीति । तस्यावन्तरदिश पादानि वेष्टका आयातयति । स एष कूर्मश्चिद् ब्राह्मणो मध्ये उत्पृष्ठ परिकृष्यत इति । अथ केचित्पठन्ति ।

अथ हैक एकविधप्रभृतीन्प्रउगादीन्ब्रुवते ॥ (३१८) (१६)

Some teachers maintain that the agnis beginning with the one fold agni ought to be in the shape of a triangle etc

This and the following sūtras refer to the contested point about the agnis of smaller area than 7½ square *puruṣas* which had been discussed in II 14 21 There it had been settled that no agni should be smaller than the seven fold, although some teachers maintained the legitimacy of the agnis from 1½ square *puruṣas* to 6½ square *puruṣas* A modification of these teachers' doctrine is now introduced here agnis of small size may be constructed but then only in the form of *praugas* *rathacakracit* etc not in that of birds (318) [16]

अथ हैक विधप्रभृतानपक्षपुच्छाश्चिन्वत इत्यारभ्यैकविधादीनामकरण प्रतिपाद्य तस्मात्सप्तविध एव प्रथमोऽग्निरिति सप्तविधस्यैवाग्ने प्रथमाग्नित्व प्रतिज्ञात तत्सप्तविधप्रशसापरमिति मन्वादिकेचिदाचार्या प्रउगादीनपक्ष पुच्छरहितानग्नीश्चेतव्यान् ब्रुवते । सप्तविधाग्नौ पुरुषप्रमाणेन वेणुना समचतुरस्र कृत्वा प्रउगादिकरणम् । पुरुषविधाग्नौ पुरुषाङ्गुलीर्द्वाभ्या हृत्वा तस्य मूलमानीय चतुरस्र कृत्वा प्रउगादि करणम । एव त्रिविधादिषु द्रष्टव्यम् । तत्रैकविधादि प्रउगादीना पक्षपुच्छादिरहितानामाकृतिविकाराभावात्सप्तविधे यदुक्तमिष्टकाकरण च तदेवात्र प्रत्येतव्यम् ।

समचतुरस्रानेक आचार्या ॥ (३१९) (१७)

Some teachers teach that they (the agnis from the one fold up to the six fold) ought to be constructed in the form of square only (319) [17]

एका आचार्या एकविधप्रभृतीनग्नीन्समचतुरस्राकाराश्चेतव्यानिति ब्रुवते । न तु प्रउगादीन् गुणविकारानित्यर्थ । अस्मिन्पक्षे करणाद्याह ।

तस्य करण्या द्वादशेनेष्टकाः कारयेत् । तासामर्ध्याः पाद्याश्च ॥
(३२०) (१८)

In this case bricks have to be made with the twelfth of the side of the square, besides half-bricks and quarter-bricks (the two latter classes are required for raising the number of the bricks to two hundred). (320) [18]

तस्याग्नेः करण्या द्वादशेनेष्टकाः कारयेत् ।

तासां द्वादशकरणीनामर्ध्यास्तिर्यग्भेदाः पाद्याश्च । अर्ध्याया-स्तिर्यग्भेदे समचतुरस्राश्च कार्या इत्यर्थः । एवं त्रिप्रकाराभिरिष्टकाभि-र्भेदपरिहारेणोपधानं कर्तव्यम् । अत्रापस्तम्बः । एकविधप्रभृतीनां कर-णीनां द्वादशेन त्रयोदशेनेतीष्टकाः कारयेत् पादेष्टकाश्च व्यत्यासं चिनुया-द्यावत् प्रस्ताराश्चिकीर्षेदिति । तत्र द्वादशभिः साध्याभिः प्रथमप्रस्तारः । इतराभिरितर इति व्यत्यासः ।

अथाश्वमेधिकस्याग्नेः पुरुषाभ्यासो नारत्निप्रादेशानाम् ॥
(३२१) (१९)

In the agni constructed during the *Aśvamedha* only the *puruṣas* are increased, not the two *aratnis* and the *prādeśa*. (321) [19]

For the *Aśvamedha*, a *śruti* had been referred to in Adhy. II. 89 *ekaviṁśo'gnir bhavatyaśvamedhasya*, *ekaviṁśa* has been translated at that place as having the same meaning with *ekaviṁśavidha*, viz the agni consisting of 21½ square puruṣas. According to the rules about the increase of the agni given in the beginning of the second Adhyāya, the agni of the *Aśvamedha* would have to be constructed by giving a proportionate increase to all the parts of the construction this is managed by dividing the fourteen square *puruṣas* by which the *ekaviṁśavidha* is larger than the *saptavidha* into fifteen parts and adding one of these parts to each of the fifteen half square-*puruṣas* which compose the *saptavidha* ($7\frac{1}{2}=\frac{15}{2}$) But according to the above sūtra and its commentary the *aśvamedhika agni* was of a different nature It had to comprise twenty-one *puruṣa* not including the lengthening of the two wings by one aratni each and of the tail by one *prādeśa* so that its ātman consisted of twelve square-*puruṣas*, its wings and tail of three *puruṣas* each. A proportional

increase of the two *aratnis* and the *prādeśa* would amount to $1\frac{1}{2}$ square *puruṣas* and then the agni would no longer be 'ekaviṁśa" as the Śruti demands Therefore the wings were lengthened only by the regular *aratni* (of 24 *aṅgulis*) and the tail by the regular *prādeśa* (12 *aṅgulis*) so that the increase of the agni caused thereby remained less than one square *puruṣa* and the agni preserved its character of *ekaviṁśa* This seems however, to be the opinion of certain teachers only and I cannot see any reason (so says Thibaut) why *ekaviṁśa* should not mean *ekaviṁśavidha* i e containing $21\frac{1}{2}$ *puruṣas* altogether There seem to have been in the different Sākhās many different doctrines about this knotty point the increase of the agni the followers of the *White Yajus* (according to Weber *Indische Studien* XIII p 240) increase the agni each time not only by one square puruṣa (the seventh part of the primitive agni without *aratnis* and *prādeśa*) but also by the fourteenth part of a *puruṣa* (this fourteenth part being the seventh part of the half *puruṣa* resulting from the lengthening of the wings and the tail) thus their *ekaviṁśavidha* comprised really $22\frac{1}{2}$ *puruṣas* ($21\frac{1}{2}+\frac{14}{14}$) their *ekaśatavidha* $101+\frac{1}{2}+\frac{94}{14}$ $=108\frac{3}{14}$ (Deva in the passage marked as containing a mistake—*Indische Studien* XIII p 241—is quite right, the *ekaśatavidha* consisting of $101+\frac{101}{14}$ square *puruṣas*)

अश्वमेध एकविंशोऽग्निभवतीत्याम्नातम् । तदभिप्रायेणेदमुच्यते । तत्रार्धाष्टमविधस्य प्रकृतिभूतस्याग्ने सप्तानामेवाभ्यास श्रुतावेकविंशति- सख्यायोगात् । नारत्नि प्रादेशाभ्यास । एकविंशतिसख्याभिस्तुल्यजातीयस्य निर्वर्तिका यथा विधाभ्यासे । तत्र पुरुषनिकरण्या पञ्चतिलोनयाष्टशतद्वयाङ्गुलया पक्षपुच्छाना मान कृत्वा पक्षपुच्छेष्वरत्निप्रादेशाना प्रक्षेप ।

प्राकृतो वा त्रिगुण ॥ (३२२) (२०)

Or it (the agni of the *aśvamedha*) has the same shape as the original agni but is three times as large (322) [20]

This agrees with the method employed in all cases by the priests of the *White Yajus*

अश्वमेधो त्रिस्तावो[1]ऽग्निर्भवतीत्याम्नातम् । तदभिप्रायेणेदमुच्यते । प्राकृत अर्धाष्टमविधोऽग्निस्त्रिविधो भवति । तस्मात् त्रिस्तावविधो

1 *Pāṇini* v 4 84

विद्याभ्यासवत्पुरुपविशेषश्रवणात् । एव चार्धत्रयोविंशा पुरुषा अग्निर्भ-वति । तत्र पुरुषत्रिकरण्या मानम् । पक्षपुच्छाना तिर्यङ्मानो त्रिकरणी तिर्यङ्मानो । पार्श्वमान्याश्च त्रिकरणी पार्श्वमानी । एवमाश्वमेधिक-स्याग्नेरुभयरूपत्वमुक्तम् । अस्मिन्नर्थे ब्राह्मणमुदाहरति ।

त्रिस्तावोऽग्निर्भवतीत्येकविंशोऽग्निर्भवतीत्युभयं ब्राह्मणमुभयं ब्राह्मणम् ॥ (३२३) (२१)

The agni is three times as large' and 'the agni is twenty-one-fold", both is Brāhmana (323) [21]

उभय विधिवाक्यमेवेत्यर्थ । उभयस्यापि ब्राह्मणार्थत्वादुभयमनु-ष्ठेयमिति भाव । वीप्सा समाप्तिख्यापनार्था ।

टीकाभट्टात्मजेनेत्थं द्वारकानाथयज्वना ।
तृतीयो व्याकृतो ऽध्याय उपपत्तिसमन्वित ॥

# The Baudhāyana Śulba Sūtras

## INDEX TO THE SŪTRAS

## सूत्रानुक्रमणिका

## बौधायन शुल्वसूत्रम्